मनोऽन्तरिक्षं विद्याश्च वायुस्तेजो जलं मही ।
शब्दस्पर्शौ तथा रूपं रसो गन्धश्च भारत ॥ २० ॥
प्रकृतिश्च विकारश्च यच्चाऽन्यत्कारणं भुवः ।
अगस्त्यश्च महातेजा मार्कण्डेयश्च वीर्यवान् ॥ २१ ॥
जमदग्निर्भरद्वाजः संवर्तश्च्यवनस्तथा ।
दुर्वासाश्च महाभाग ऋष्यशृङ्गश्च धार्मिकः ॥ २२ ॥
सनत्कुमारो भगवान्योगाचार्यो महातपाः ।
असितो देवलश्चैव जैगीषव्यश्च तत्त्ववित् ॥ २३ ॥
ऋषभो जितशत्रुश्च महावीर्यस्तथा मणिः ।
आयुर्वेदस्तथाऽष्टाङ्गो देहवांस्तत्र भारत ॥ २४ ॥
चन्द्रमाः सह नक्षत्रैरादित्यश्च गभस्तिमान् ।
वायवः क्रतवश्चैव संकल्पः प्राण एव च ॥ २५ ॥
मूर्तिमन्तो महात्मानो महाव्रतपरायणाः ।
एते चान्ये च बहवो ब्रह्माणं समुपस्थिताः ॥ २६ ॥
अर्थो धर्मश्च कामश्च हर्षो द्वेषस्तपो दमः ।
आयान्ति तस्यां सहिता गन्धर्वाप्सरसां गणाः ॥ २७ ॥
विंशतिः सप्त चैवाऽन्ये लोकपालाश्च सर्वशः ।

किया करते हैं। दक्ष, प्रचेता, पुलह, मरीचि, कश्यप, अत्रि, भृगु, वसिष्ठ, गौतम, अङ्गिरा, पुलस्त्य, क्रतु, प्रह्लाद, कर्दम, अथर्ववेदी आङ्गिरस, सूर्य की किरणों को पीकर रहनेवाले वालखिल्य, मन, अन्तरिक्ष, विद्या, वायु, अग्नि, जल, पृथ्वी, शब्द, स्पर्श, रूप, रस, गन्ध, प्रकृति, महत्तत्व, और सब सृष्टि के कारण महातेजस्वी अगस्त्य, मार्कण्डेय, जमदग्नि, भरद्वाज, संवर्त, च्यवन, महाभाग दुर्वासा, ऋष्यशृङ्ग, महातपस्वी योगाचार्य भगवान् सनत्कुमार, असित, देवल, तत्त्व-ज्ञाता जैगीषव्य, जितशत्रु, ऋषभ, महावीर्य, मणि, आयुर्वेद अपने आठों अङ्गोंसहित देह धारण किये हुए, नक्षत्रोंसहित चन्द्रमा, सूर्य, उनचासों वायु, सम्पूर्ण यज्ञ, संकल्प और प्राण आदि सब पदार्थ मूर्तिमान् होकर ब्रह्मा जी की उपासना किया करते हैं ॥१८।२६॥

धर्म, अर्थ, काम, हर्ष, द्वेष, तप, दम आदि पदार्थ, मूर्तिमान् होकर ब्रह्मा जी की सेवा में लगे रहते हैं। गन्धर्व और अप्सराओं के दल, सत्ताईस नक्षत्र, इन्द्रादि, लोकपाल शुक्र, बृहस्पति, बुध, मङ्गल, शनैश्चर, राहु आदि ग्रह, मन्त्र, रथन्तर साम, हरिमान् और वसुमान् नाम के एक प्रकार के विशेष कर्म, अग्नि-सोम, इन्द्र-अग्नि, आदि देवताओंसहित आदित्यगण,

शुक्रो बृहस्पतिश्चैव बुधोऽङ्गारक एव च ॥ २८ ॥
शनैश्चरश्च राहुश्च ग्रहाः सर्वे तथैव च ।
मन्त्रो रथन्तरं चैव हरिमान्वसुमानपि ॥ २९ ॥
आदित्याः साधिराजानो नामद्वन्द्वैरुदाहृताः ।
मरुतो विश्वकर्मा च वसवश्चैव भारत ॥ ३० ॥
तथा पितृगणाः सर्वे सर्वाणि च हवींष्यथ ।
ऋग्वेदः सामवेदश्च यजुर्वेदश्च पाण्डव ॥ ३१ ॥
अथर्ववेदश्च तथा सर्वशास्त्राणि चैव हि ।
इतिहासोपवेदाश्च वेदाङ्गानि च सर्वशः ॥ ३२ ॥
ग्रहा यज्ञाश्च सोमश्च देवताश्चापि सर्वशः ।
सावित्री दुर्गतरणी वाणी सप्तविधा तथा ॥ ३३ ॥
मेधा धृतिः स्मृतिश्चैव प्रज्ञा बुद्धिर्यशः क्षमा ।
सामानि स्तुतिशास्त्राणि गाथाश्च विविधास्तथा ॥ ३४ ॥
भाष्याणि तर्कयुक्तानि देहवन्ति विशाम्पते ।
नाटका विविधाः काव्याः कथाख्यायिककारिकाः ॥ ३५ ॥
तत्र तिष्ठन्ति ते पुण्या ये चाऽन्ये गुरुपूजकाः ।
क्षणा लवा मुहूर्ताश्च दिवा रात्रिस्तथैव च ॥ ३६ ॥
अर्धमासाश्च मासाश्च ऋतवः षट् च भारत ।

मरुद्गण, विश्वकर्मा, आठ वसु, पितृगण, हवि, ऋग्वेद, सामवेद, यजुर्वेद, अथर्ववेद, सब शास्त्र, इतिहास, आयुर्वेद, धनुर्वेद आदि उपवेद, वेदों के ■ अङ्ग, सब सोम पात्र, सब यज्ञ, सोम, सावित्री, दुर्गतरणी, सात प्रकार* की वाणी, मेधा, धृति, स्मृति, प्रज्ञा, बुद्धि, यश, क्षमा, शास्त्र नामक सामवेद की स्तुतियां, नाना प्रकार की गाथाएँ, तर्क-सहित भाष्य ये सब देह धारण किये हुए, नाना प्रकार के नाटक, काव्य कथानक, आख्यायिकाएँ, और कारिकाएँ, ये सब मूर्तिमान् होकर ब्रह्मा की महासभा में उपस्थित रहते हैं। बड़े बूढ़ों और गुरुओं की पूजा एवं सत्कार करनेवाले महापुरुषों को उस लोक में जाने का अधिकार है। ॥२७।३६॥

क्षण, लव, मुहूर्त, दिन, रात्रि, पक्ष, मास, ऋतु, पॉच प्रकार का सँवत्सर, चार प्रकार के रात दिन [१-मनुष्यों का रात दिन साठ घड़ी का, २-पितरों

*दुर्गतरणी वाणी प्रणवरूप है। अकार, उकार, मकार, अर्धमात्रा, नाद, बिन्दु, शक्ति, यह उसके उत्तरोत्तर सूक्ष्म सात प्रकार हैं।

संवत्सराः पञ्चयुगमहोरात्रश्चतुर्विधः ॥ ३७ ॥
कालचक्रं च तद्दिव्यं नित्यमक्षयमव्ययम् ।
धर्मचक्रं तथा चापि नित्यमास्ते युधिष्ठिर ॥ ३८ ॥
अदितिर्दितिर्दनुश्चैव सुरसा विनता इरा ।
कालिका सुरभी देवी सरमा चाऽथ गोतमी ॥ ३९ ॥
प्रभा कद्रूश्च वै देव्यौ देवतानां च मातरः ।
रुद्राणी श्रीश्च लक्ष्मीश्च भद्रा षष्ठी तथापरा ॥ ४० ॥
पृथिवी गाङ्गता देवी ह्रीः स्वाहा कीर्तिरेव च ।
सुरा देवी शची चैव तथा पुष्टिररुन्धती ॥ ४१ ॥
संवृत्तिराशा नियतिः सृष्टिर्देवी रतिस्तथा ।
एताश्चान्याश्च वै देव्य उपतस्थुः प्रजापतिम् ॥ ४२ ॥
आदित्या वसवो रुद्रा मरुतश्चाऽश्विनावपि ।
विश्वेदेवाश्च साध्याश्च पितरश्च मनोजवाः ॥ ४३ ॥
पितॄणां च गणान्विद्धि सप्त वै पुरुषर्षभ ।
मूर्तिमन्तो वै चत्वारस्त्रयश्चापि शरीरिणः ॥ ४४ ॥
वैराजाश्च महाभागा अग्निष्वात्ताश्च भारत ।
गार्हपत्या नाकचराः पितरो लोकविश्रुताः ॥ ४५ ॥
सोमपा एकशृङ्गाश्च चतुर्वेदाः कलास्तथा ।
एते चतुर्षु वर्णेषु पूज्यन्ते पितरो नृप ॥ ४६ ॥

---

का एक महीने का, ३–देवताओं का एक वर्ष का, ४–ब्रह्मा का एक कल्प का], इस प्रकार बारह राशियों-वाला, अक्षय, अव्यय, नित्य और दिव्य कालचक्र तथा धर्मचक्र यहाँ नित्य उपस्थित रहते हैं। हे राजा युधिष्ठिर ! अदिति, दिति, दनु, सुरसा, विनता, इरा, कालिका, सुरभी, सरमा, गौतमी, प्रभा, कद्रू, रुद्राणी, श्री, लक्ष्मी, भद्रा, षष्ठी देवी, मूर्तिमती पृथ्वी, गाङ्गता, ह्री, स्वाहा, कीर्ति, सुरा, देवी इन्द्राणी, पुष्टि, अरुन्धती, संवृत्ति, आशा, नियति, सृष्टि, रति, आदि अनेक देवियाँ प्रजापति ब्रह्मा की उपासना किया करती हैं ॥३७।४२॥

आदित्यगण, वसुगण, रुद्रगण, मरुद्गण, साध्य-गण, विश्वेदेवा, दोनों अश्विनीकुमार, मन के तुल्य चलनेवाले पितर आदि भी भगवान् ब्रह्मा की सभा में उपस्थित रहते हैं। हे राजा युधिष्ठिर ! पितरों के सात गण हैं। इनमें चार शरीरधारी और तीन बिना

एतैराप्यायितैः पूर्वं सोमश्चाऽऽप्यायते पुनः ।
त एते पितरः सर्वे प्रजापतिमुपस्थिताः ।
उपासते च संहृष्टा ब्रह्माणममितौजसम् ॥ ४७ ॥
राक्षसाश्च पिशाचाश्च दानवा गुह्यकास्तथा ।
नागाः सुपर्णाः पशवः पितामहमुपासते ॥ ४८ ॥
स्थावरा जङ्गमाश्चैव महाभूतास्तथाऽपरे ।
पुरन्दरश्च देवेन्द्रो वरुणो धनदो यमः ॥ ४९ ॥
महादेवः सहोमोऽत्र सदा गच्छति सर्वशः ।
महासेनश्च राजेन्द्र सदोपास्ते पितामहम् ॥ ५० ॥
देवो नारायणस्तस्यां तथा देवर्षयश्च ये ।
ऋषयो वालखिल्याश्च योनिजाऽयोनिजास्तथा ॥ ५१ ॥
यच्च किंचित्त्रिलोकेऽस्मिन्दृश्यते स्थाणुजङ्गमम् ।
सर्वं तस्यां मया दृष्टमिति विद्धि नराधिप ॥ ५२ ॥
अष्टाशीतिसहस्राणि ऋषीणामूर्ध्वरेतसाम् ।
प्रजावतां च पञ्चाशदृषीणामपि पाण्डव ॥ ५३ ॥
ते स्म तत्र यथाकामं दृष्ट्वा सर्वे दिवौकसः ।
प्रणम्य शिरसा तस्मै सर्वे यान्ति यथागतम् ॥ ५४ ॥

शरीर के हैं। अग्निष्वात्त, वैराज और गार्हपत्य, ये तीन पितृगण स्वर्गचारी हैं। सोमप, एकशृङ्ग, चतुर्वेद और कला नामक चार पितृगण ब्राह्मण आदि चारों वर्णों में पूजित होते हैं। पितृगण पहले स्वयं तृप्त होकर सोम को प्रसन्न करते हैं। ये सभी पितृगण ब्रह्मा की सभा में रहकर भगवान् प्रजापति की उपासना किया करते हैं ॥४३।४७॥

इनके अतिरिक्त राक्षस, पिशाच, दानव, गुह्यक, नाग, सुपर्ण, पशु, स्थावर और जङ्गम अन्य महाप्राणी प्रसन्नचित्त से परम तेजस्वी महात्मा पितामह ब्रह्मा की उपासना किया करते हैं। इन्द्र, वरुण, कुबेर, यमराज, उमासहित महादेव आदि श्रेष्ठ देवता वहां आते-जाते रहते हैं। हे राजेन्द्र! कार्त्तिकेय, नारायण, सब देव ऋषि लोग, वालखिल्य ऋषिगण तथा योनिज और अयोनिज सब प्राणी उस सभा में ब्रह्मा जी की उपासना किया करते हैं। हे राजा युधिष्ठिर! अधिक क्या कहूं, चर या अचर जो कोई पदार्थ इस त्रिलोकी में देख पड़ता है सो सब ब्रह्मा जी की सभा में मैंने देखा है ॥४८।५२॥

हे पाण्डवश्रेष्ठ! उस सभा में अट्ठासी सहस्र ऊर्ध्वरेता [बालब्रह्मचारी] ऋषि और पचास हज़ार गृहस्थाश्रमी सन्तानवान् ऋषि वहां मैंने देखे हैं। स्वर्ग

अतिथीनागतान्देवान्दैत्यान्नागांस्तथा द्विजान् ।
यक्षान्सुपर्णान्कालेयान्गन्धर्वाप्सरसस्तथा ॥ ५५ ॥
महाभागानमितधीर्ब्रह्मा लोकपितामहः ।
दयावान् सर्वभूतेषु यथार्हं प्रतिपद्यते ॥ ५६ ॥
प्रतिगृह्य तु विश्वात्मा स्वयंभूरमितद्युतिः ।
सान्त्व-मानार्थसंभोगैर्युनक्ति मनुजाधिप ॥ ५७ ॥
तथा तैरुपयातैश्च प्रतियद्भिश्च भारत ।
आकुला सा सभा तात भवति स्म सुखप्रदा ॥ ५८ ॥
सर्वतेजोमयी दिव्या ब्रह्मर्षिगणसेविता ।
ब्राह्म्या श्रिया दीप्यमाना शुशुभे विगतक्लमा ॥ ५९ ॥
सा सभा तादृशी दृष्टा मया लोकेषु दुर्लभा ।
सभेयं राजशार्दूल मनुष्येषु यथा तव ॥ ६० ॥
एता मया दृष्टपूर्वाः सभा देवेषु भारत ।
सभेयं मानुषे लोके सर्वश्रेष्ठतमा तव ॥ ६१ ॥

इति श्रीमन्महाभारते सभापर्वणि लोकपालसभाख्यानपर्वणि ब्रह्मसभावर्णनं नाम एकादशोऽध्यायः ॥ ११ ॥

के रहनेवाले सभी जीव इच्छा के अनुसार उस सभा में जाते और प्रजापति ब्रह्मा को प्रणाम कर अपने अपने लोकों को चले जाते हैं । [हे राजा युधिष्ठिर ! भगवान् ब्रह्मा सब प्राणियों को एक दृष्टि से देखते हैं । उनकी बुद्धि असीम है । वे उग्र तेजस्वी, विश्वयोनि, सब लोगों के पितामह और स्वयम्भू हैं] । वे अपनी सभा में आये हुए देव, दानव, नाग, ब्राह्मण, यक्ष, सुपर्ण, कालेय, गन्धर्व, और अप्सरा आदि महाभाग्यशाली अतिथियों को यथायोग्य मधुर वचनों से सादर सन्तुष्ट करके, इच्छा के अनुसार भोग की सामग्रियाँ देकर, विशेष रूप से तृप्त करते हैं । उस सभा में अभ्यागतों की सदा भीड़ लगी रहती है । उसमें असङ्ख्य ब्रह्मर्षि रहते हैं । उसका प्रकाश बहुत बड़ा है । उसमें जाते ही शरीर और मन का खेद जाता रहता है । वह दिव्य सभा अपनी अपूर्व आभा से आप ही जगमगाती हुई बहुत ही सुन्दर है । हे पुरुषश्रेष्ठ ! मनुष्यलोक में जैसे तुम्हारी यह सभा सब से बढ़कर है, वैसे ही देवलोक में ब्रह्मा की सभा अद्वितीय है । मैंने देवलोक की सभी सभाएँ देखी हैं, परन्तु इस समय मनुष्यलोक में तुम्हारी यह सभा ही सबसे बढ़िया जान पड़ती है ॥ ५-३१ ॥

— ० —

सभापर्व का ग्यारहवाँ अध्याय समाप्त हुआ ॥

अथ द्वादशोऽध्यायः ॥ १२ ॥

युधिष्ठिर उवाच—प्रायशो राजलोकस्ते कथितो वदतां वर ।
वैवस्वतसभायां तु यथा वदसि मे प्रभो ॥ १ ॥
वरुणस्य सभायां तु नागास्ते कथिता विभो ।
दैत्येन्द्राश्चापि भूयिष्ठाः सरितः सागरास्तथा ॥ २ ॥
तथा धनपतेर्यक्षा गुह्यका राक्षसास्तथा ।
गन्धर्वाप्सरसश्चैव भगवांश्च वृषध्वजः ॥ ३ ॥
पितामहसभायां तु कथितास्ते महर्षयः ।
सर्वे देवनिकायाश्च सर्वशास्त्राणिचैव ह ॥ ४ ॥
शक्रस्य तु सभायां तु देवाः संकीर्तिता मुने ।
उद्देशतश्च गन्धर्वा विविधाश्च महर्षयः ॥ ५ ॥
एक एव तु राजर्षिर्हरिश्चन्द्रो महामुने ।
कथितस्ते सभायां वै देवेन्द्रस्य महात्मनः ॥ ६ ॥
किं कर्म तेनाऽऽचरितं तपो वा नियतव्रत ।
येनासौ सह शक्रेण स्पर्धते सुमहायशाः ॥ ७ ॥
पितृलोकगतश्चैव त्वया विप्र पिता मम ।
दृष्टः पाण्डुर्महाभागः कथं वापि समागतः ॥ ८ ॥
किमुक्तवांश्च भगवंस्तन्ममाऽऽचक्ष्व सुव्रत ।

बारहवां अध्याय ॥ १२ ॥

यह सुनकर युधिष्ठिर ने कहा—हे कथा कहने वालों में श्रेष्ठ देवर्षे ! आपने जिन सभाओं का वर्णन किया उनमें से यमराज की सभा में सब राजाओं के रहने का आपने उल्लेख किया है। वरुण के सभासद आपने असङ्ख्य नाग, दानव, नदी, समुद्र आदि बतलाये; कुबेर की सभा में असङ्ख्य यक्षों, गन्धर्वों, निशाचरों और अप्सराओं के रहने तथा भगवान् शङ्कर के आने-जाने का उल्लेख किया। पितामह ब्रह्मा की सभा में महर्षियों, देवताओं और तन्त्रों-मन्त्रों आदि का उपस्थित रहना आपने बताया; इन्द्र की सभा में असङ्ख्य देवताओं, बहुत से महर्षियों और प्रधान-प्रधान गन्धर्वों के नाम गिनाये। किन्तु हे मुनिवर ! इन्द्र महाराज की सभा में सब राजाओं को छोड़कर एक राजा हरिश्चन्द्र के ही होने का क्या कारण है ? हे भगवन् ! राजा हरिश्चन्द्र ने ऐसा कौन-सा पुण्यकर्म किया है कि अकेले वही इन्द्र के समकक्ष होकर उनके साथ एक ही जगह पर रहते हैं ? पितृलोक में आपने हमारे पिता पाण्डु महाराज को देखा ही

त्वत्तः श्रोतुं सर्वमिदं परं कौतूहलं हि मे ॥ ९ ॥

नारद उवाच—यन्मां पृच्छसि राजेन्द्र हरिश्चन्द्रं प्रति प्रभो ।
तत्तेऽहं संप्रवक्ष्यामि माहात्म्यं तस्य धीमतः ॥ १० ॥
स राजा बलवानासीत्सम्राट् सर्वमहीक्षिताम् ।
तस्य सर्वे महीपालाः शासनावनताः स्थिताः ॥ ११ ॥
तेनैकं रथमास्थाय जैत्रं हेमविभूषितम् ।
शस्त्रप्रतापेन जिता द्वीपाः सप्त जनेश्वर ॥ १२ ॥
स निर्जित्य महीं कृत्स्नां सशैलवनकाननाम् ।
आजहार महाराज राजसूयं महाक्रतुम् ॥ १३ ॥
तस्य सर्वे महीपाला धनान्याजह्रुराज्ञया ।
द्विजानां परिवेष्टारस्तस्मिन्यज्ञे च तेऽभवन् ॥ १४ ॥
प्रादाच्च द्रविणं प्रीत्या याचकानां नरेश्वरः ।
यथोक्तवन्तस्ते तस्मिंस्ततः पञ्चगुणाधिकम् ॥ १५ ॥
अतर्पयच्च विविधैर्वसुभिर्ब्राह्मणांस्तदा ।
प्रसर्पकाले संप्राप्ते नानादिग्भ्यः समागतान् ॥ १६ ॥
भक्ष्यभोज्यैश्च विविधैर्यथाकामपुरस्कृतैः ।

होगा। उनकी आपस क्या बातचीत हुई ? उन्होंने मुझसे क्या कहने के लिये आपसे कहा है ? कृपा करके ये सब बातें विशेषरूप से वर्णन करके मेरे मन का कौतूहल दूर कीजिए ॥९।१०॥

यह सुनकर नारद जी ने कहा हे राजा युधिष्ठिर ! आप बड़े बुद्धिमान्, इन्द्रलोक में रहनेवाले राजा हरिश्चन्द्र के बारे में जो पूछते हैं, सो मैं विशेषरूप से वर्णन करता हूँ। राजा हरिश्चन्द्र बड़ा बलवान् और सब राजाओं का सम्राट् था। सभी राजा उसके आधीन रहकर उसे सिर झुकाते थे। उसने सुवर्ण से भूषित रथपर चढ़कर शस्त्र के प्रताप से जम्बू, कुश, शाक, क्रौंच, शाल्मलि, गोमेद और पुष्कर इन सातों द्वीपों को जीता था। इस प्रकार से सब पृथ्वी को पहाड़ और वनोंसहित जीतकर उसने राजसूय यज्ञ रचा था। उस यज्ञ में सब राजा लोग धन, अन्न और अन्य अनेक प्रकार के उपहार ले-लेकर उसके पास आये थे। वे सब यज्ञ में ब्राह्मणों की सेवा के काम में नियुक्त थे ॥१०।१४॥

उस यज्ञ के अवसर पर जिसने जो माँगा, उसे राजा ने वही दिया यही नहीं, बल्कि माँगने से चौगुना-पंचगुना दान किया। यज्ञ के विसर्जन होने के समय राजा ने दूर दूर से आये हुए बहुत ब्राह्मणों को उनकी इच्छा के अनुसार खाने-पीने का सामान, दक्षिणा में बहुत सा धन और सम्पत्ति देकर सन्तुष्ट कर दिया।

रत्नौघतर्पितैस्तुष्टैर्द्विजैश्च समुदाहृतम् ॥ १७ ॥
तेजस्वी च यशस्वी च नृपेभ्योऽप्यधिकोऽभवत्।
एतस्मात्कारणाद्राजन्हरिश्चन्द्रो विराजते ॥ १८ ॥
तेभ्यो राजसहस्रेभ्यस्तद्विद्धि भरतर्षभ ।
समाप्य च हरिश्चन्द्रो महायज्ञं प्रतापवान् ॥ १९ ॥
अभिषिक्तश्च शुशुभे साम्राज्येन नराधिप ।
ये चाऽन्ये च महीपाला राजसूयं महाक्रतुम् ॥ २० ॥
यजन्ते ते सहेन्द्रेण मोदन्ते भरतर्षभ ।
ये चापि निधनं प्राप्ताः संग्रामेष्वपलायिनः ॥ २१ ॥
ते तत्सदनमासाद्य मोदन्ते भरतर्षभ ।
तपसा ये च तीव्रेण त्यजन्तीह कलेवरम् ॥ २२ ॥
ते तत्स्थानं समासाद्य श्रीमन्तो भांति नित्यशः।
पिता च त्वाऽऽह कौन्तेय पाण्डुः कौरवनन्दन ॥ २३ ॥
हरिश्चन्द्रे श्रियं दृष्ट्वा नृपतौ जातविस्मयः ।
विज्ञाय मानुषं लोकमायान्तं मां नराधिप ॥ २४ ॥
प्रोवाच प्रणतो भूत्वा वदेथास्त्वं युधिष्ठिरम् ।

बहुत सा धन पाकर ब्राह्मण लोग बहुत प्रसन्न हुए। उन्होंने यह घोषणा करदी कि इस समय राजा हरिश्चन्द्र तेज, यश और ऐश्वर्य में सबसे बढ़कर है। अब तक कोई राजा उसके समान प्रतापी नहीं हुआ। हे राजन्! यही कारण है कि इन्द्रधाम में, जहाँ जाने के लिये अन्य राजाओं के मन में लालसा बनी रहती है, राजा हरिश्चन्द्र ही विराजमान है। प्रबल प्रतापी और पराक्रमी हरिश्चन्द्र का महायज्ञ राजसूय कर चुकने के बाद, सम्राट् के पद पर अभिषेक हो जाने से, बड़ा गौरव हुआ। हे भरत-नन्दन! जो राजा लोग बहुत धन के बिना न हो सकनेवाला राजसूय यज्ञ करके उसे विधिपूर्वक बिना किसी विघ्न के पूरा कर लेते हैं वही इन्द्र के साथ सुख भोगते हुए उनके समान पद के अधिकारी होते हैं। जो क्षत्रिय राजा युद्धभूमि में ठहरकर प्रबल शत्रुओं के पराक्रम को देख तनिक भी नहीं डरते, सामने लड़कर मौत को गले लगाते हैं, उन्हें भी इन्द्र सभासदस्यता मिलने पर अपार आनन्द प्राप्त होता है। और, जो लोग अत्यन्त कठोर तपस्या में मन लगाकर शरीर को छोड़ते हैं वे भी वहां रहकर, नित्य अपार सुख-सम्पत्ति भोगने के अधिकारी होते है ॥१५।२२॥

हे राजा युधिष्ठिर! तुम्हारे पिता महाराज पाण्डु भी राजा हरिश्चन्द्र के इस अपूर्व सौभाग्य को देखकर चकरा गये है। मुझे मनुष्यलोक में आते देख

समर्थोऽसि महीं जेतुं भ्रातरस्ते स्थिता वशे ॥ २५ ॥
राजसूयं क्रतुश्रेष्ठमाहरस्वेति भारत ।
त्वयीष्टवति पुत्रेऽहं हरिश्चन्द्रवदाशु वै ॥ २६ ॥
मोदिष्ये बहुलाः शश्वत्समाः शक्रस्य संसदि ।
एवं भवतु वक्ष्येऽहं तव पुत्रं नराधिपम् ॥ २७ ॥
भूर्लोकं यदि गच्छेयमिति पाण्डुमथाऽब्रुवम् ।
तस्य त्वं पुरुषव्याघ्र संकल्पं कुरु पाण्डव ॥ २८ ॥
गन्ताऽसि त्वं महेन्द्रस्य पूर्वैः सह सलोकताम् ।
बहुविघ्नश्च नृपते क्रतुरेष स्मृतो महान् ॥ २९ ॥
छिद्राण्यस्य तु वाञ्छन्ति यज्ञघ्ना ब्रह्मराक्षसाः ।
युद्धं च क्षत्रशमनं पृथिवीक्षयकारणम् ॥ ३० ॥
किंचिदेव निमित्तं च भवत्यत्र क्षयावहम् ।
एतत्संचिन्त्य राजेन्द्र यत्क्षेमं तत्समाचर ॥ ३१ ॥
अप्रमत्तोत्थितो नित्यं चातुर्वर्ण्यस्य रक्षणे ।

उन्होंने प्रणाम करके मुझसे कहा था हे महाराज ! आप कृपा करके मेरे बड़े पुत्र युधिष्ठिर से कहना कि सब भाई तुम्हारे अधीन हैं। उनकी सहायता से तुम सहज ही सब पृथ्वी को जीतकर दिग्विजय कर सकते हो। इसलिये तुम अवश्य राजसूय यज्ञ करो। तुम मेरे पुत्र हो। तुम यदि यज्ञ फल लाभ के अधिकारी होओगे तो मैं भी राजा हरिश्चन्द्र के समान इन्द्र का सभासद होकर उनके साथ और किसी के अनुभव में न आया हुआ आनन्द पाकर परम सुखी और कृतार्थ बनूंगा ॥२३।२६॥

हे राजन् ! तुम्हारे पिता की यह प्रार्थना सुन कर मैंने कहा कि बहुत अच्छा, जो मैं मनुष्यलोक में जाऊँगा तो तुम्हारा सन्देशा तुम्हारे पुत्र से कह दूँगा। हे राजा युधिष्ठिर ! तुमने महात्मा पाण्डु का सन्देश सुन लिया; अब उनकी इच्छा पूरी करने का यत्न करो। जो तुम यह यज्ञ कर लोगे तो, अपने पूर्वजों के साथ इन्द्र की सभा के सभासद होकर, परम सुखी हो सकोगे। यह यज्ञ बहुत बड़ा है। इसमें विघ्न भी बहुत से होते हैं। और यज्ञ के नाश करनेवाले ब्रह्मराक्षस सदा उसमें छिद्र ढूँढा करते हैं। यज्ञ प्रारम्भ होते ही क्षत्रियों के बीच युद्ध की आग जलने लगती है। इस युद्ध में समय-समय पर पृथ्वी-मण्डल की सभी वस्तुओं के उजड़ जाने की आशङ्का हो जाती है। तात्पर्य यह है कि कुछ भी दोष हो जाने पर एकदम सर्वनाश हो जाता है ॥२७।३०॥

इसलिये इन सब बातों पर विचार करके जैसा उचित हो वैसा करो। हे राजा युधिष्ठिर ! तुम चारों वर्णों की रक्षा बड़ी सावधानी से करते रहो। तुम्हारा

भव एधस्व मोदस्व धनैस्तर्पय च द्विजान् ॥ ३२ ॥
एतत्ते विस्तरेणोक्तं यन्मां त्वं परिपृच्छसि ।
आपृच्छे त्वां गमिष्यामि दाशार्हनगरीं प्रति ॥ ३३ ॥
वैशम्पायन उवाच–एवमाख्याय पार्थेभ्यो नारदो जनमेजय ।
जगाम तैर्वृतो राजन्नृषिभिर्यैः समागतः ॥ ३४ ॥
गते तु नारदे पार्थो भ्रातृभिः सह कौरव ।
राजसूयं क्रतुश्रेष्ठं चिन्तयामास पार्थिवः ॥ ३५ ॥

इति श्रीमन्महाभारते सभापर्वणि लोकपालसभाख्यानपर्वणि पाण्डुसंदेशकथने द्वादशोऽध्यायः ॥१२॥
समाप्तं लोकपालसभाख्यानपर्व ॥

अभ्युदय हो। तुम्हें प्रसन्नता प्राप्त हो। ब्राह्मणों को दक्षिणा आदि से सन्तुष्ट करते हुए उनसे आशीर्वाद प्राप्त करो। तुमने जो पूछा था सो मैंने विस्तार के साथ कह दिया। अब मैं विदा होता हूँ। मेरा विचार द्वारकापुरी को जाने का है। वैशम्पायन ने कहा–हे राजा जनमेजय! नारद जी पाण्डवों से विदा होकर उन ऋषियोंसहित जिनके साथ आये थे चले गये। उनके चले जानेपर अब राजा युधिष्ठिर अपने छोटे भाइयों से राजसूय यज्ञ करने की सलाह करने लगे ॥३१।३५॥

सभापर्व का बारहवा अध्याय समाप्त हुआ ॥

---

अथ त्रयोदशोऽध्यायः ॥ १३ ॥

वैशम्पायन उवाच–ऋषेस्तद्वचनं श्रुत्वा निशश्वास युधिष्ठिरः ।
चिन्तयन्राजसूयेष्टिं न लेभे शर्म भारत ॥ १ ॥
राजर्षीणां च तं श्रुत्वा महिमानं महात्मनाम् ।
यज्वनां कर्मभिः पुण्यैर्लोकप्राप्तिं समीक्ष्य च ॥ २ ॥
हरिश्चन्द्रं च राजर्षिं रोचमानं विशेषतः ।
यज्वानं यज्ञमाहर्तुं राजसूयमियेष सः ॥ ३ ॥
युधिष्ठिरस्ततः सर्वानर्चयित्वा सभासदः ।

तेरहवा अध्याय ॥ १३ ॥

वैशम्पायन कहते है–हे जनमेजय! देवर्षि नारद के वचन सुनकर महाराज युधिष्ठिर ने एक लम्बी श्वास ली। वे विचार करने लगे कि राजसूय यज्ञ किस प्रकार हो। इसी चिन्ता ने उन्हें बेचैन कर दिया। महात्मा राजऋषियों की महिमा, पुण्यकर्म करने से यजमानों को श्रेष्ठ लोकों की प्राप्ति और राजसूय यज्ञ का फल भोगनेवाले राजा हरिश्चन्द्र के स्वर्गवास आदि बातों के बारे में विचार करने से राजसूय

प्रत्यर्चितश्च तैः सर्वैर्यज्ञायैव मनो दधे　　॥ ४ ॥
स राजसूयं राजेन्द्र ! कुरूणामृषभस्तदा ।
आहर्तुं प्रवणं चक्रे मनः संचिन्त्य चाऽसकृत् ॥ ५ ॥
भूयश्चाऽद्भुतवीर्यौजा धर्ममेवाऽनुचिन्तयन् ।
किं हितं सर्वलोकानां भवेदिति मनो दधे　　॥ ६ ॥
अनुगृह्णन्प्रजाः सर्वाः सर्वधर्मभृतां वरः ।
अविशेषेण सर्वेषां हितं चक्रे युधिष्ठिरः　　॥ ७ ॥
सर्वेषां दीयतां देयं मुष्णन्कोपमदावुभौ ।
साधु धर्मेति धर्मेति नाऽन्यच्छ्रूयेत भाषितम् ॥ ८ ॥
एवं गते ततस्तस्मिन्पितरीवाऽऽश्वसञ्जनाः ।
न तस्य विद्यते द्वेष्टा ततोऽस्याऽजातशत्रुता　　॥ ९ ॥
परिग्रहान्नरेन्द्रस्य भीमस्य परिपालनात् ।
शत्रूणां क्षपणाच्चैव बीभत्सोः सव्यसाचिनः　　॥ १० ॥
धीमतः सहदेवस्य धर्माणामनुशासनात् ।
वैनत्यात्सर्वतश्चैव नकुलस्य स्वभावतः ।
अविग्रहा वीतभयाः स्वकर्मनिरताः सदा　　॥ ११ ॥

यज्ञ करने के लिये उनकी उत्कण्ठा प्रबल हो उठी। अब महाराज युधिष्ठिर ने सभासदों का सम्मान करके और उनसे सम्मान पाकर राजसूय यज्ञ करने का विचार कर लिया। अद्भुत तेज-प्रताप से अलङ्कृत, श्रेष्ठ धर्मात्मा युधिष्ठिर ने धर्म करने की चिन्ता में अपना मन लगा दिया। उनके मन में केवल यही चिन्ता प्रबल हो उठी कि प्रजा का भला किस उपाय से हो सकता है। वे क्रोध, मत्सर आदि से बचकर, पक्षपात छोड़कर, सभी का उपकार करने लगे। उन्होंने अपने गुरु का सब देना चुका देने की आज्ञा दे दी। सब जगह सब लोग धर्म को और धर्मराज को, साधुवाद देते दिखाई पड़ते थे। लगातार धर्म कर्म करने से सब प्रजा दिन दिन उन्हें अपने पिता के समान समझकर उनपर अटल भक्ति रखने लगी। उनका अप्रिय या अनिष्ट की चेष्टा करनेवाला कोई नहीं देख पड़ता था। इसी कारण युधिष्ठिर का नाम 'अजातशत्रु' पड़ गया ॥१।०॥

भीमसेन अपने बाहुबल से प्रजा के कष्टों को दूर करते हुए उसकी रक्षा और पालन करने लगे। अर्जुन शत्रुओं का नाश करने में और बुद्धिमान् सहदेव धर्म के आचरण में प्रवृत्त हुए। महात्मा नकुल स्वाभाविक नम्रता से सबको अपने अनुकूल बनाने लगे। इस प्रकार पाँचों पाण्डवों के यत्न से सब प्रजा युद्ध आदि के झगड़ों से बची रहकर आनन्द-

निकामवर्षाः स्फीताश्च आसञ्जनपदास्तथा ।
वार्द्धूषी यज्ञसत्त्वानि गोरक्षं कर्षणं वणिक् ॥ १२ ॥
विशेषात्सर्वमेवैतत्संजज्ञे राजकर्मणा ।
अनुकर्ष च निष्कर्षं व्याधिपावकमूर्च्छनम् ॥ १३ ॥
सर्वमेव न तत्राऽऽसीद्धर्मनित्ये युधिष्ठिरे ।
दस्युभ्यो वञ्चकेभ्यश्च राज्ञः प्रति परस्परम् ॥ १४ ॥
राजवल्लभतश्चैव नाऽश्रूयत मृषाकृतम् ।
प्रियं कर्तुमुपस्थातुं बलिकर्म स्वकर्मजम् ॥ १५ ॥
अभिहर्तुं नृपाः षट्सु पृथग्जात्यैश्च नैगमैः ।
ववृधे विषयस्तत्र धर्मनित्ये युधिष्ठिरे ॥ १६ ॥
कामतोऽप्युपयुञ्जाने राजसैर्लोभजैर्जनैः ।
सर्वव्यापी सर्वगुणी सर्वसाहः स सर्वराट् ॥ १७ ॥
यस्मिन्नधिकृतः सम्राड् भ्राजमानो महायशाः ।
यत्र राजन्! दश दिशः पितृतो मातृतस्तथा ।

पूर्वक अपने-अपने काम करने लगी। नगरों और गाँवों में प्रजा के मध्य में कहीं लड़ाई झगड़ा नहीं होता था। ठीक समय पर जल वर्षता था। सब लोग भरे-पुरे और सम्पन्न हो गये। धर्मराज युधिष्ठिर के राज्यकाल में किसी आवश्यक वस्तु की कमी नहीं रह गई। शासन की उत्तमता से महाजनी, यज्ञ फल, गोरक्षा, पशु-पालन, खेती, वनिज आदि सभी बातों की उन्नति होने लगी ॥१०।१३॥

धोखा देकर प्रजा के धन को ठगना या बलपूर्वक छीन लेना,व्याधि-भय,अग्नि-भय, अकाल मृत्यु आदि का कहीं नाम न सुन पड़ता था। उस समय कहीं यह सुन भी न पड़ता था कि चोर, ठग या राजा के कृपा-पात्र लोग कहीं कुछ अत्याचार कर रहे हैं। गरीबी के कारण राजा की मालगुजारी बाक़ी रहना, 'कर' के लिये प्रजापीड़न, वर्षा का न होना, या अत्यन्त वर्षा होना, ये उपद्रव राजा युधिष्ठिर के राज्य में न होते थे। अपने रोजगार के ऊपर बँधा हुआ टैक्स देने के लिये व्यापारियों के आने से और राजा का प्रिय करने तथा उनकी उपासना के लिये कर देने-वाले राजाओं के लगातार आने-जाने से राजा युधि-ष्ठिर की राजधानी और राज की दिन दिन श्री-वृद्धि होने लगी। अधिक क्या कहें, उनके राज्यकाल में सुख सम्भोग-लोलुप और लोभ-मद आदि राजसी वृत्तियों के अत्यन्त वशीभूत विलासी व्यक्तियों के द्वारा भी देश की विशेष रूप से उन्नति होने लगी। युधिष्ठिर को सब लोग सर्वव्यापक सब गुणों से अलकृत, सहन-शील, शान्तस्वभाव, जानते और मानते थे। तेजस्वी, महायशस्वी, सम्राट् धर्मराज ने जिन जिन स्थानों पर

अनुरक्ताः प्रजा आसन्नागोपाला द्विजातयः ॥ १८ ॥

वैशम्पायन उवाच स मन्त्रिणः समानाय्य भ्रातृंश्च वदतां वरः ।
राजसूयं प्रति तदा पुनः पुनरपृच्छत ॥ १९ ॥
ते पृच्छ्यमानाः सहिता वचोऽर्थ्यं मन्त्रिणस्तदा ।
युधिष्ठिरं महाप्राज्ञं यियक्षुमिदमब्रुवन् ॥ २० ॥
येनाऽभिषिक्तो नृपतिर्वारुणं गुणमृच्छति ।
तेन राजापि तं कृत्स्नं सम्राड्गुणमभीप्सति ॥ २१ ॥
तस्य सम्राड्गुणार्हस्य भवतः कुरुनन्दन ।
राजसूयस्य समयं मन्यन्ते सुहृदस्तव ॥ २२ ॥
तस्य यज्ञस्य समय स्वाधीनः क्षत्रसंपदा ।
साम्ना षडग्नयो यस्मिंश्चीयन्ते संशितव्रतैः ॥ २३ ॥
दर्वीहोमानुपादाय सर्वान्यः प्राप्नुते क्रतून् ।
अभिषेकं च यस्याऽन्ते सर्वजित्तेन चोच्यते ॥ २४ ॥
समर्थोऽसि महाबाहो सर्वे ते वशगा वयम् ।
अचिरात्त्वं महाराज ! राजसूयमवाप्स्यसि ॥ २५ ॥
अविचार्य महाराज ! राजसूये मनः कुरु ।

अधिकार कर लिया था वहां के ब्राह्मणों से लेकर शूद्र अहीर तक उनको अपने पिता-माता अथवा उनसे भी अधिक समझकर उन पर भक्ति और श्रद्धा रखते थे। ॥१५।१८॥

बोलने की अलौकिक शक्ति रखनेवाले राजा युधिष्ठिर अपने छोटे भाइयों और मन्त्रियों को बुलाकर उनसे अपने राजसूय यज्ञ करने के बारे में बार-बार सलाह करने लगे। यज्ञ करने की इच्छा रखनेवाले बुद्धिमान् युधिष्ठिर के अर्थपूर्ण वाक्य सुनकर मन्त्रियों ने एकमत होकर उनसे कहा—हे कुरुश्रेष्ठ ! जो राजा सार्वभौम नरेश के योग्य गुणों का पात्र होकर अभ्युदय को प्राप्त होता है वही राजसूय यज्ञ करने का अधिकारी समझा जाता है। राजसूय यज्ञ करने से ही राजा सम्राट् कहलाता है। आप में सम्राट् के सब गुण विद्यमान है, इसलिये आप राजसूय यज्ञ अच्छी तरह कर सकते हैं। हम लोग और आपके इष्ट-मित्र यह बात मानते हैं कि इस समय आप राजसूय यज्ञ करने योग्य है, आप शीघ्र ही इस यज्ञ का अनुष्ठान कीजिए। आपके मित्र भी इसका अनुमोदन करेंगे। इस समय राज्य में किसी प्रकार का उपद्रव नहीं है ॥१९।२२॥

क्षत्रियबल-सम्पन्न होने पर यह यज्ञ सहज ही किया जा सकता है। व्रतधारी सामवेदी ऋत्विक् ब्राह्मण लोग इस यज्ञ में मन्त्रपाठ पूर्वक छः प्रकार

इत्येवं सुहृदः सर्वे पृथक्च सह चाऽब्रुवन् ॥ २६ ॥
स धर्म्यं पाण्डवस्तेषां वचः श्रुत्वा विशाम्पते ।
धृष्टमिष्टं वरिष्ठं च जग्राह मनसाऽरिहा ॥ २७ ॥
श्रुत्वा सुहृद्वचस्तच्च जानंश्चाऽप्यात्मनः क्षमम् ।
पुनः पुनर्मनो दध्रे राजसूयाय भारत ! ॥ २८ ॥
स भ्रातृभिः पुनर्धीमानृत्विग्भिश्च महात्मभिः ।
मन्त्रिभिश्चापि सहितो धर्मराजो युधिष्ठिरः ।
धौम्यद्वैपायनाद्यैश्च मन्त्रयामास मन्त्रवित् ॥ २९ ॥
युधिष्ठिर उवाच—इयं या राजसूयस्य सम्राडर्हस्य सुक्रतोः ।
श्रद्दधानस्य वदत स्पृहा मे सा कथं भवेत् ? ॥ ३० ॥
वैशम्पायन उवाच—एवमुक्तास्तु ते तेन राज्ञा राजीवलोचन ! ।
इदमूचुर्वचः काले धर्मराजं युधिष्ठिरम् ॥ ३१ ॥
अर्हस्त्वमसि धर्मज्ञ ! राजसूयं महाक्रतुम् ।
अथैवमुक्ते नृपतावृत्विग्भिर्ऋषिभिस्तथा ॥ ३२ ॥

के अग्नि की स्थापना करते हैं। राजसूय यज्ञ की दीक्षा लेने से और यज्ञान्त में अवभृथ स्नान तथा राज्याभिषेक होने से अग्निहोत्र आदि सभी यज्ञों के करने का फल मिल जाता है। इसी कारण राजसूय यज्ञ की दीक्षा लेनेवाला सर्वजित् कहलाता है। हे महाराज! आप बड़े पराक्रमी और प्रतापी हैं; हम लोग भी आपके आज्ञाकारी है। यज्ञ का आरम्भ कीजिए; शीघ्र ही आपकी इच्छा पूरी होगी। इसलिए अब आप अधिक सोच विचार न करके राजसूय यज्ञ प्रारम्भ कर दीजिए। हे राजा जनमेजय! युधिष्ठिर के मन्त्री, इष्ट-मित्र आदि ने एकत्र होकर और अलग-अलग भी उन्हें यही सम्मति दी ॥२३।२६॥

पाण्डव युधिष्ठिर ने उनकी धर्म-सम्पादक, इष्ट और न्याय-सङ्गत श्रेष्ठ यह सलाह मन ही मन मान ली। किन्तु उनके मनमें यह आन्दोलन बराबर चलता रहा कि इस यज्ञ का अनुष्ठान अभी मेरे लिये उचित है या नहीं। इस इतने बड़े यज्ञ की योग्यता मुझमें है या नहीं; परन्तु बार-बार राजसूय यज्ञ करने की ओर ही उनका मन ललक उठता था। इस कारण मन्त्र कार्य में चतुर धर्मराज युधिष्ठिर फिर अपने भाइयों, मन्त्रियों, महात्मा ऋत्विक् ब्राह्मणों और धौम्य, व्यास आदि को एकत्र करके उनसे पूछने लगे। धर्मराज ने कहा—सार्वभौम राजा के करने योग्य राजसूय महायज्ञ करने के लिये मेरा जी बहुत चाहता है। मुझे उसके करने की श्रद्धा है। अब तुम लोग बताओ कि किस उपाय से मेरा यह मनोरथ सफल हो सकता है ॥२७।३०॥

वैशम्पायन कहते हैं—हे राजा जनमेजय! धर्मराज युधिष्ठिर के इस प्रस्ताव को सुनकर सबने यह समयोचित सलाह दी—हे महाराज! आप व्यर्थ चिन्ता

मन्त्रिणो भ्रातरश्चाऽस्य तद्वचः प्रत्यपूजयन् ।
स तु राजा महाप्राज्ञः पुनरेवाऽऽत्मनाऽऽत्मवान् ॥ ३३ ॥
भूयो विममृशे पार्थो लोकानां हितकाम्यया ।
सामर्थ्ययोगं संप्रेक्ष्य देशकालौ व्ययागमौ ॥ ३४ ॥
विमृश्य सम्यक्च धिया कुर्वन्प्राज्ञो न सीदति ।
न हि यज्ञसमारम्भः केवलात्मविनिश्चयात् ॥ ३५ ॥
भवतीति समाज्ञाय यत्नतः कार्यमुद्वहन् ।
स निश्चयार्थं कार्यस्य कृष्णमेव जनार्दनम् ॥ ३६ ॥
सर्वलोकात्परं मत्वा जगाम मनसा हरिम् ।
अप्रमेयं महाबाहुं कामाज्जातमजं नृपु ॥ ३७ ॥
पाण्डवस्तर्कयामास कर्मभिर्देवसंमितैः ।
नाऽस्य किंचिदविज्ञातं नाऽस्य किंचिदकर्मजम् ॥ ३८ ॥
न स किंचिन्न विषहेदिति कृष्णममन्यत ।
स तु तां नैष्ठिकीं बुद्धिं कृत्वा पार्थो युधिष्ठिरः ॥ ३९ ॥

कर रहे हैं। आप अवश्य राजसूय यज्ञ करने के योग्य पात्र हैं। काम शुरु कर दीजिए, सहज ही आपकी इच्छा पूर्ण होगी। इस प्रकार भाइयों, मन्त्रियों, ऋत्विजों और ऋषियों को अपनी इच्छा के अनुकूल सलाह देते देखकर जितेन्द्रिय सत्यवादी महाराज युधिष्ठिर को बड़ा सन्तोष हुआ। किन्तु इसके पश्चात् फिर वे सोचने लगे कि जो मनुष्य अपनी सामर्थ्य, सुयोग, देश, काल, आमदनी और खर्च पर अच्छी तरह विचार कर किसी काम को शुरु करता है, उसे पीछे पछताना नहीं पडता। बुद्धिमान् चतुर लोग इन बातों पर विशेष रूप से विचार किये बिना काम नहीं करते, इसी से उन्हें मुसीबत में नहीं पडना पड़ता॥३१।३४॥

केवल अपने ही निश्चय पर भरोसा करके किसी तरह इतने बड़े यज्ञ के काम में हाथ डालना उचित नहीं। यह सोचकर धर्मराज ने कर्त्तव्य का निश्चय करने के विचार से पुरुषोत्तम कृष्ण को स्मरण किया। उन्होंने विचार किया कि कृष्णचन्द्र सब मनुष्यों में श्रेष्ठ हैं। वे अप्रमेय, महाबाहु, अपनी इच्छा से मनुष्य लोक में उत्पन्न साक्षात् नारायण हैं। देवताओं के ऐसे कृष्णचन्द्र के विचित्र कार्यों को देखकर धर्मराज युधिष्ठिर को निश्चय हो गया था कि पृथ्वीमण्डल में ऐसी कोई वस्तु या बात ही नहीं जिसे कृष्ण न जानते हों, ऐसा कोई काम ही नहीं जिसे वे सहज ही न कर सकते हों, ऐसी कोई बात ही नहीं जिसे वे सह न सकते हों। कृष्ण के बारे में ऐसा दृढ निश्चय कर चुकने पर युधिष्ठिर ने आशीर्वाद और अपना सन्देशा कहने के लिये आज्ञा देकर इन्द्रसेन नाम दूत को उसी समय जगद्गुरु कृष्ण के पास भेजा॥३५।३०॥

गुरुवद् भूतगुरवे प्राहिणोद् दूतमञ्जसा ।
शीघ्रगेण रथेनाऽऽशु स दूतः प्राप्य यादवान् ॥ ४० ॥
द्वारकावासिनं कृष्णं द्वारवत्यां समासदत् ।
दर्शनाकाङ्क्षिणं पार्थं दर्शनाकाङ्क्षयाऽच्युतः ॥ ४१ ॥
इन्द्रसेनेन सहित इन्द्रप्रस्थमगात्तदा ।
व्यतीत्य विविधान्देशांस्त्वरावान्क्षिप्रवाहनः ॥ ४२ ॥
इन्द्रप्रस्थगतं पार्थमभ्यगच्छज्जनार्दनः ।
स गृहे पितृवद् भ्रात्रा धर्मराजेन पूजितः ॥ ४३ ॥
भीमेन च ततोऽपश्यत्स्वसारं प्रीतिमान्पितुः ।
प्रीतः प्रीतेन सुहृदा रेमे स सहितस्तदा ॥ ४४ ॥
अर्जुनेन यमाभ्यां च गुरुवत्पर्युपासितः ।
तं विश्रान्तं शुभे देशे क्षणिनं कल्पमच्युतम् ।
धर्मराजः समागम्य ज्ञापयत्स्वप्रयोजनम् ॥ ४५ ॥
युधिष्ठिर उवाच—प्रार्थितो राजसूयो मे न चाऽसौ केवलेप्सया ।
प्राप्यते येन तत्ते हि विदितं कृष्ण सर्वशः ॥ ४६ ॥
यस्मिन्सर्वं संभवति यश्च सर्वत्र पूज्यते ।
यश्च सर्वेश्वरो राजा राजसूयं स विन्दति ॥ ४७ ॥

शीघ्र चलनेवाले रथपर बैठकर वह दूत द्वारकापुरी में यादवों के मध्य में बैठे कृष्ण के पास गया। दूत के मुख से सब वृत्तान्त सुनकर, अपने दर्शन की इच्छा रखनेवाले धर्मराज को दर्शन देने के विचार से, कृष्णचन्द्र उसी समय उस दूत के साथ चल पड़े। वायु के समान वेगशाली रथ पर बैठकर वासुदेव इन्द्रसेन के साथ इन्द्रप्रस्थ पहुँचे और सभा में आकर युधिष्ठिर से मिले। बुआ के लड़के धर्मराज और भीमसेन ने पिता की तरह स्नेह से कृष्ण का सत्कार और स्वागत किया। उनके आदर-यत्न से अत्यन्त प्रसन्न होकर कृष्णचन्द्र ने अपनी बुआ कुन्ती के पास जाकर उनके पैर छुए। नकुल और सहदेव ने शिष्य की तरह उनकी पूजा की और प्रिय मित्र अर्जुन उनके गले से लग गये। इस प्रकार पाण्डवों के पास पहुँचकर कृष्णचन्द्र बड़े प्रसन्न हुए ॥४०।४४॥

जब वह अपनी बुआ कुन्ती से मिलकर कुछ देर विश्राम कर चुके तब युधिष्ठिर उनके पास जाकर अपना प्रयोजन कहने लगे—हे कृष्ण जी! मैं राजसूय यज्ञ करना चाहता हूँ, किन्तु केवल चाहने से ही राजसूय यज्ञ नहीं हो सकता। जिस तरह यह यज्ञ सम्पन्न हो सकता है सो तुमसे छिपा नहीं है। राजसूय यज्ञ वही कर सकता है, जिसमें सब कुछ सम्भव हो,

तं राजसूयं सुहृदः कार्यमाहुः समेत्य मे ।
तत्र मे निश्चिततमं तव कृष्ण गिरा भवेत् ॥ ४८ ॥
केचिद्धि सौहृदादेव न दोषं परिचक्षते ।
स्वार्थहेतोस्तथैवाऽन्ये प्रियमेव वदन्त्युत ॥ ४९ ॥
प्रियमेव परीप्सन्ते केचिदात्मनि यद्धितम् ।
एवंप्रायाश्च दृश्यन्ते जनवादाः प्रयोजने ॥ ५० ॥
त्वं तु हेतूनतीत्यैतान्कामक्रोधौ व्युदस्य च ।
परमं यत्क्षमं लोके यथावद्वक्तुमर्हसि ॥ ५१ ॥

इति श्रीमन्महाभारते सभापर्वणि राजसूयारम्भपर्वणि वासुदेवागमने त्रयोदशोऽध्यायः ॥ १३ ॥

जो सर्वत्र पूजा पाता हो और जो सब पृथ्वीमण्डल का चक्रवर्ती राजा हो। मेरे बन्धु-बान्धवों की सलाह है कि मैं यज्ञ करूँ; यह यज्ञ करने के लिये वे मुझे सब तरह समर्थ समझते और कहते हैं। परन्तु बिना तुम्हारी सलाह लिये मैं इस बारे में कुछ निश्चय नहीं कर सकता। तुम यदि इसका अनुमोदन करोगे तो फिर मैं पूर्णरूप से यह यज्ञ करने का निश्चय कर लूँगा। मैं तुम्हारी सलाह पर ही पूरा भरोसा करता हूँ। इसका एक विशेष कारण है। बहुत से लोग ऐसे होते है जो मित्रता के ख्याल से मित्र के दोष या कमी का उल्लेख करना नहीं चाहते। कुछ लोग ऐसे होते हैं जो अपने स्वार्थ के लिये चापलूसी करते है। कुछ ऐसे होते हैं जो उसी बात को प्रिय कहकर उसके करने की सलाह देते है जिसमें अपना भला हो। हे वासुदेव ! इस संसार में ऐसे ही लोगों की संख्या अधिक है। किन्तु ऐसे लोगों की सलाह पर भरोसा करके कोई काम कर उठाना बुद्धिमान् पुरुष का काम नहीं। तुम काम, क्रोध, लोभ, मोह, मद, मत्सर आदि नीच प्रवृत्तियों के वशीभूत नहीं हो। इसी से मै तुम्हारी श्रेष्ठ सम्मति सुनना चाहता हूँ। जैसा उचित समझो वैसा मुझसे कहो ॥४५।५१॥

— * —

सभापर्व का तेरहवां अध्याय समाप्त हुआ ॥

अथ चतुर्दशोऽध्यायः ॥ १४ ॥

श्रीकृष्ण उवाच—सर्वैर्गुणैर्महाराज ! राजसूयं त्वमर्हसि ।
जानतस्त्वेव ते सर्वं किंचिद्वक्ष्यामि भारत ! ॥ १ ॥

चौदहवां अध्याय ॥ १४ ॥

युधिष्ठिर की यह बात सुनकर श्रीकृष्ण ने कहा—हे राजन् ! आप में सभी श्रेष्ठ गुण है। इसलिये आप सब तरह राजसूय यज्ञ करने के योग्य पात्र है। आप सब जानते हैं; तो भी मैं आपसे कुछ कहता हूँ, सुनिए। जमदग्नि के पुत्र परशुराम ने पूर्व समय में क्षत्रिय वंश का जड़सहित नाश कर

जामदग्न्येन रामेण क्षत्रं यदवशेषितम् ।
तस्मादवरजं लोके यदिदं क्षत्रसंज्ञितम् ॥ २ ॥
कृतोऽयं कुलसंकल्पः क्षत्रियैर्वसुधाधिप! ।
निदेशभाग्भिस्तत्ते हि विदितं भरतर्षभ! ॥ ३ ॥
ऐलस्यैक्ष्वाकुवंशस्य प्रकृतिं परिचक्षते ।
राजानः श्रेणिबद्धाश्च तथाऽन्ये क्षत्रिया भुवि ॥ ४ ॥
ऐलवंश्याश्च ये राजंस्तथैवेक्ष्वाकवो नृपाः ।
तानि चैकशतं विद्धि कुलानि भरतर्षभ! ॥ ५ ॥
ययातेस्त्वेव भोजानां विस्तरो गुणतो महान् ।
भजतेऽद्य महाराज! विस्तरं स चतुर्दिशम् ॥ ६ ॥
तेषां तथैव तां लक्ष्मीं सर्वक्षत्रमुपासते ।
इदानीमेव वै राजञ्जरासन्धो महीपतिः ।
अभिभूय श्रियं तेषां कुलानामभिषेचितः ॥ ७ ॥
स्थितो मूर्ध्नि नरेन्द्राणामोजसाऽऽक्रम्य सर्वशः ।
सोऽवनिं मध्यमां भुक्त्वा मिथो भेदममन्यत ॥ ८ ॥
प्रभुर्यस्तु परो राजा यस्मिन्नेकवशे जगत् ।
स साम्राज्यं महाराज! प्राप्तो भवति योगतः ॥ ९ ॥
तं स राजा जरासन्धं संश्रित्य किल सर्वशः ।

दिया था। इस समय जो क्षत्रिय कहे जाते हैं वे पहले के क्षत्रियों की अपेक्षा हीन पराक्रमी और निकृष्ट हैं। उन्होंने एकत्र होकर जो कुलों के नियम आदि चलाये हैं उन्हें भी आप जानते हैं। इस समय के अधिकाश क्षत्रिय और राजा अपने को इला और इक्ष्वाकु की सन्तान कहते हैं ॥१।४॥

इला और इक्ष्वाकु की सन्तानों से सौ कुल पैदा हुए। उनमें भोजवश के राजा ययाति का कुल ही पृथ्वीमण्डल भर में प्रसिद्ध और श्रेष्ठ है। हे राजन्! सब क्षत्रिय कुल अपने पूर्वजों के राज्य-ऐश्वर्य का उपभोग करते आते थे; परन्तु वर्त्तमान समय में मगध-नरेश राजा जरासन्ध ने अपने बाहुबल से सब राजाओं को वश में कर लिया है। वह इस समय एकाधिपत्य राज्य कर रहा है। जो कोई सब का प्रभु और अखण्ड पृथ्वीमण्डल का अद्वितीय अधिपति हो वही राजसूय यज्ञ कर सकता है ॥५।९॥

पराक्रमी शिशुपाल जरासन्ध का सहायक और सेनापति है। मायायुद्ध करने में निपुण, प्रबल प्रतापी

राजन्! सेनापतिर्जातः शिशुपालः प्रतापवान् ॥ १० ॥
तमेव च महाराज! शिष्यवत्समुपस्थितः ।
वक्रः करूषाधिपतिर्मायायोधी महाबलः ॥ ११ ॥
अपरौ च महावीर्यौ महात्मानौ समाश्रितौ ।
जरासन्धं महावीर्यं तौ हंसडिम्भकावुभौ ॥ १२ ॥
वक्रदन्तः करूषश्च करभो मेघवाहनः ।
मूर्ध्ना दिव्यमणिं बिभ्रद्यमद्भुतमणिं विदुः ॥ १३ ॥
मुरुं च नरकं चैव शास्ति यो यवनाधिपः ।
अपर्यन्तबलो राजा प्रतीच्यां वरुणो यथा ॥ १४ ॥
भगदत्तो महाराज! वृद्धस्तव पितुः सखा ।
स वाचा प्रणतस्तस्य कर्मणा च विशेषतः ॥ १५ ॥
स्नेहबद्धश्च मनसा पितृवद्भक्तिमांस्त्वयि ।
प्रतीच्यां दक्षिणं चान्तं पृथिव्याः प्रति यो नृपः ॥ १६ ॥
मातुलो भवतः शूरः पुरुजित्कुन्तिवर्धनः ।
स ते सन्नतिमानेकः स्नेहतः शत्रुसूदनः ॥ १७ ॥
जरासन्धं गतस्त्वेव पुरा यो न मया हतः ।
पुरुषोत्तमविज्ञातो योऽसौ चेदिषु दुर्मतिः ॥ १८ ॥
आत्मानं प्रति जानाति लोकेऽस्मिन्पुरुषोत्तमम् ।
आदत्ते सततं मोहाद्यः स चिह्नं च मामकम् ॥ १९ ॥

करूष देश का राजा वक्र, जरासन्ध की सभा में शिष्य के समान उसकी उपासना करता है। हंस और डिम्भक नाम के दो और पराक्रमी राजा जरासन्ध के आज्ञाकारी हैं। वक्रदन्त, करभ और मेघवाहन भी उसके अनुगत हैं। हे महाराज! लोकप्रसिद्ध अद्भुत दिव्य मणि को मस्तक पर धारण करनेवाले, मुरु और नरक-देश के शासक पश्चिम दिशा में राज्य फैलाकर वरुण के समान राजराज, अमित-बलशाली आपके पिता के मित्र, यवनाधिपति वृद्ध भगदत्त भी सदा जरासन्ध के अनुकूल रहते हैं। ॥११।१५॥

पश्चिम और दक्षिण दिशा के सब से श्रेष्ठ शासक, आप पर अत्यन्त स्नेह रखनेवाले, स्नेह के कारण सदा आप की भलाई चाहनेवाले, कुन्तिवंश-वर्द्धन, शत्रुदमन आपके मामा पुरुजित् भी जरासन्ध के अनुगत हैं। चेदि देश में प्रसिद्ध, अपने को

वङ्गपुण्ड्रकिरातेषु राजा बलसमन्वितः ।
पौण्ड्रको वासुदेवेति योऽसौ लोकेऽभिविश्रुतः ॥ २० ॥
चतुर्थभाङ् महाराज ! भोज इन्द्रसखो बली ।
विद्यावलाद्यो व्यजयत्स पाण्ड्यक्रथकैशिकान् ॥ २१ ॥
भ्राता यस्याऽकृतिः शूरो जामदग्न्यसमोऽभवत् ।
स भक्तो मागधं राजा भीष्मकः परवीरहा ॥ २२ ॥
प्रियाण्याचरतः प्रह्वान्सदा संबन्धिनस्ततः ।
भजतो न भजत्यस्मानप्रियेषु व्यवस्थितः ॥ २३ ॥
न कुलं न बलं राजन्नभ्यजानात्तथाऽऽत्मनः ।
पश्यमानो यशो दीप्तं जरासन्धमुपस्थितः ॥ २४ ॥
उदीच्याश्च तथा भोजाः कुलान्यष्टादश प्रभो ।
जरासन्धभयादेव प्रतीचीं दिशमास्थिताः ॥ २५ ॥
शूरसेना भद्रकारा बोधाः शाल्वाः पटच्चराः ।
सुस्थलाश्च सुकुट्टाश्च कुलिन्दाः कुन्तिभिः सह ॥ २६ ॥
शाल्वायनाश्च राजानः सोदर्यानुचरैः सह ।
दक्षिणा ये च पञ्चालाः पूर्वाः कुन्तिषु कोशलाः ॥ २७ ॥
तथोत्तरां दिशं चापि परित्यज्य भयार्दिताः ।

पुरुषोत्तम कहकर मोहवश सदा मेरे चिह्नों को धारण करनेवाला, वङ्ग-पुण्ड्र-किरात देशों का अधिपति, मिथ्या वासुदेव, महापराक्रमी पौण्डक भी इस समय जरासन्ध के अधीन हो गया है ॥१६।२०॥

चतुर्थांश पृथ्वीमण्डल के अधिपति, भोज और राजा इन्द्र के सखा, पाण्ड्य क्रथ-कैशिक देश-विजेता, विद्वान्, बली, शत्रुकुलनाशक, परशुराम के समान तेजस्वी अकृति राजा के बड़े भाई भीष्मक राजा भी जरासन्ध के भक्त हैं। हम इन भीष्मक के नातेदार हैं, सदा उनका प्रिय करने की इच्छा रखते हैं, विनय और नम्रता के साथ उन के अनुगत रहते हैं, तो भी वे हमारी ओर नहीं हुए। वे भी जरासन्ध की प्रसिद्धि और प्रताप का हाल सुनकर मोहित होकर, कुलपरम्परा से चली आ रही शूरता-वीरता-गम्भीरता और मान-आत्माभिमान को भूलकर उसके शरणागत हुए ॥२१।२४॥

अठारह भोजकुल, और उत्तर देश के सब राजा जरासन्ध के डर से ही पश्चिम दिशा को चले गये हैं। शूरसेन, भद्रकार, बोध, शाल्व, पटच्चर, सुस्थल, सुकुट्ट, कुलिन्द, कुन्ति, शाल्वायन आदि वहाँ के राजा, दक्षिण-पञ्चाल के राजा, और पूर्व कोशल के राजा भी भाइयों और अनुचरों के साथ अपने-अपने

मत्स्याः संन्यस्तपादाश्च दक्षिणां दिशमाश्रिताः॥ २८ ॥
तथैव सर्वपञ्चाला जरासन्धभयार्दिताः ।
स्वराज्यं संपरित्यज्य विद्रुताः सर्वतो दिशम् ॥ २९ ॥
कस्यचित्त्वथ कालस्य कंसो निर्मथ्य यादवान् ।
बार्हद्रथसुते देव्यावुपागच्छद् वृथामतिः ॥ ३० ॥
अस्तिः प्राप्तिश्च नाम्ना ते सहदेवानुजेऽबले ।
बलेन तेन स ज्ञातीनभिभूय वृथामतिः ॥ ३१ ॥
श्रैष्ठ्यं प्राप्तः स तस्याऽऽसीदतीवाऽपनयो महान् ।
भोजराजन्यवृद्धैश्च पीड्यमानैर्दुरात्मना ॥ ३२ ॥
ज्ञातित्राणमभीप्सद्भिरस्मत्संभावना कृता ।
दत्वाऽक्रूराय सुतनुं तामाहुकसुतां तदा ॥ ३३ ॥
संकर्षणद्वितीयेन ज्ञातिकार्यं मया कृतम् ।
हतौ कंससुनामानौ मया रामेण चाप्युत ॥ ३४ ॥
भये तु समतिक्रान्ते जरासन्धे समुद्यते ।
मन्त्रोऽयं मन्त्रितो राजन् ! कुलैरष्टादशावरैः ॥ ३५ ॥
अनारमन्तो निघ्नन्तो महास्त्रैः शत्रुघातिभिः ।
न हन्यामो वयं तस्य त्रिभिर्वर्षशतैर्बलम् ॥ ३६ ॥

राज्य छोड़कर, जरासन्ध के डर से कुन्ति देश में जाकर रहे हैं। मत्स्य संन्यस्तपाद देश के राजा भय के मारे दक्षिण दिशा को चले गये है। पाञ्चाल देश के भी सब राजा जरासन्ध के डर से अपने राज्य छोड़कर दूर-दूर इधर-उधर भाग गये है ॥२५।२९॥

कुछ समय हुआ, राजा उग्रसेन के पुत्र दानवराज कंस ने यादवों को जीतकर जरासन्ध की अस्ति और प्राप्ति नाम की दो कन्याओं से विवाह किया था। इस प्रकार जरासन्ध से सम्बन्ध जोड़ करके मूढ़ दुष्ट कंस का साहस और भी बढ़ गया। वह अपने जातिवालों और कुटुम्बियों को बड़ा दुःख देने लगा। हे महाराज! ऐसा करने से कंस को सब लोग घृणा की दृष्टि से देखने और उसकी निन्दा करने लगे। भोजवंश के वृद्ध क्षत्रिय लोग उस दुष्ट के अत्याचार को अधिक न सह सके, तब वे जाति-रक्षा की इच्छा से मेरी शरण में आये। जाति का हित करने के लिये मैंने आहुक की पुत्री सुतनु का विवाह अक्रूर से करा दिया और बलभद्र की सहायता से कंस और सुनामा, दोनों को मारकर जाति का उपकार किया ॥३०।३४॥

यह सुनकर जरासन्ध बड़ी भारी सेना लेकर हमारे ऊपर चढ़ आया। उसकी सेना को देखकर

तस्य ह्यमरसंकाशौ बलेन बलिनां वरौ ।
नामभ्यां हंसडिम्भकावशस्त्रनिधनावुभौ ॥ ३७ ॥
तावुभौ सहितौ वीरौ जरासन्धश्च वीर्यवान् ।
त्रयस्त्रयाणां लोकानां पर्याप्ता इति मे मतिः ॥ ३८ ॥
न हि केवलमस्माकं यावन्तोऽन्ये च पार्थिवाः ।
तथैव तेषामासीच्च बुद्धिर्बुद्धिमतां वर ! ॥ ३९ ॥
अथ हंस इति ख्यातः कश्चिदासीन्महान्नृपः ।
रामेण स हतस्तत्र संग्रामेऽष्टादशावरे ॥ ४० ॥
हतो हंस इति प्रोक्तमथ केनापि भारत ! ।
तच्छ्रुत्वा डिम्भको राजन् ! यमुनाम्भस्यमज्जत ॥ ४१ ॥
विना हंसेन लोकेऽस्मिन्नाऽहं जीवितुमुत्सहे ।
इत्येतां मतिमास्थाय डिम्भको निधनं गतः ॥ ४२ ॥
तथा तु डिम्भकं श्रुत्वा हंसः परपुरंजयः ।
प्रपेदे यमुनामेव सोऽपि तस्यां न्यमज्जत ॥ ४३ ॥
तौ स राजा जरासन्धः श्रुत्वा च निधनं गतौ ।
पुरं शून्येन मनसा प्रययौ भरतर्षभ ! ॥ ४४ ॥

मैने अपने से छोटे अठारह यादव-कुलों से मिलकर सलाह की कि यदि हम, शत्रुओं को नष्ट करनेवाले, तीक्ष्ण अस्त्रों से लगातार तीन सौ वर्ष तक युद्ध करते रहें ता भी जरासन्ध की सेना का बिलकुल नाश नहीं कर सकते; क्योंकि देवताओं के समान तेजस्वी महाबली हस और डिम्भक दोनों राजा जरासन्ध के पार्श्वरक्षक है । वे अस्त्र के द्वारा मारे नहीं जा सकते । उन्हें ऐसा ही वरदान है । वे दोनों वीर और तीसरा जरासन्ध मिलकर तीनों लोकों को जीत सकते है । हे राजन् ! यह केवल मेरा ही मत न था, किन्तु सब राजाओं का ऐसा ही विश्वास था ॥३५।३९॥

हम लोगों से युद्ध करने के लिये सत्रहवीं वार जब जरासन्ध चढ़कर आया तब हमको हस और डिम्भक के नाश का एक उपाय सूझ गया। युद्ध में बलभद्र ने हंस नाम के किसी और राजा को मारा उसको देखकर किसी ने डिम्भक से जाकर कह दिया कि हस मारा गया । वह यह सुनकर हंस के बिना अपना जीना व्यर्थ जान कर यमुना में डूबकर मर गया । डिम्भक की मृत्यु जब हस ने सुनी तब वह भी भाई क शोक से विकल हो उठा । उसने भी यमुना में कूदकर जान दे दी । हंस और डिम्भक की मृत्यु हुई सुनकर जरासन्ध की हिम्मत टूट गई। वह उदास होकर अपने नगर को लौट गया । हम लोग भी आनन्द के साथ अपनी मथुरा पुरी में रहने

ततो वयममित्रघ्न ! तस्मिन्प्रीतगते नृपे ।
पुनरानन्दिनः सर्वे मथुरायां वसामहे ॥ ४५ ॥
यदा त्वभ्येत्य पितरं सा वै राजीवलोचना ।
कंसभार्या जरासन्ध-दुहिता मागधं नृपम् ॥ ४६ ॥
चोदयत्येव राजेन्द्र पतिव्यसनदुःखिता ।
पतिघ्नं मे जहीत्येवं पुनः पुनररिन्दम ! ॥ ४७ ॥
ततो वयं महाराज ! तं मन्त्रं पूर्वमन्त्रितम् ।
संस्मरन्तो विमनसो व्यपयाता नराधिप ! ॥ ४८ ॥
पृथक्त्वेन महाराज ! संक्षिप्य महतीं श्रियम् ।
पलायामो भयात्तस्य ससुतज्ञातिबान्धवाः ॥ ४९ ॥
इति संचिन्त्य सर्वे स्म प्रतीचीं दिशमाश्रिताः ।
कुशस्थलीं पुरीं रम्यां रैवतेनोपशोभिताम् ॥ ५० ॥
ततो निवेशं तस्यां च कृतवन्तो वयं नृप ! ।
तथैव दुर्गसंस्कारं देवैरपि दुरासदम् ॥ ५१ ॥
स्त्रियोऽपि यस्यां युध्येयुः किमु वृष्णिमहारथाः ।
तस्यां वयममित्रघ्न ! निवसामोऽकुतोभयाः ॥ ५२ ॥
आलोच्य गिरिमुख्यं तं मागधं तीर्णमेव च ।

लगे ॥४०।४५॥

उधर कमल-नयनी कंस की स्त्री पति के शोक से विह्वल होकर अपने पिता जरासन्ध को बार-बार यह कहकर युद्ध के लिये उत्साहित करने लगी कि मेरे पति को जिसने मारा है उससे बदला लो। हम लोगों ने भी जरासन्ध के बल वीर्य को स्मरण कर और उसकी चढ़ाई देखकर, पहले की सम्मति के अनुसार मथुरापुरी से भाग जाना उचित समझा। शत्रु के भय से हम लोग बहुत सी सम्पत्ति वहीं छोड़कर—थोड़ी सी आपस में बाँटकर और वही लेकर—सजातीय, पुत्र, बन्धु-बान्धव आदि के साथ वहाँ से भागकर रैवतक पर्वत से शोभित कुशस्थली नाम की रमणीय नगरी में जाकर बसे हैं। वहाँ जाकर और किले आदि की मुरम्मत कराकर हमने उसपर अपना अधिकार जमा लिया है ॥४६।५१॥

अनेक दुर्गम दुर्गों से रक्षित वह नगरी इस समय ऐसी है कि देवता भी सहज में उसके भीतर नहीं प्रवेश कर सकते। वीर वृष्णिवंश के पुरुषों की तो बात ही नहीं, दुर्ग के अन्दर से स्त्रियाँ भी अच्छी-तरह युद्ध करके आत्मरक्षा कर सकती हैं। सब यादव लोग उस गढ़ की दुर्गमता और उस स्थान का सुरक्षित होना देखकर, अपने को जरासन्ध के

माधवाः कुरुशार्दूल ! परां मुदमवाप्नुवन् ॥ ५३ ॥
एवं वयं जरासन्धादभितः कृतकिल्बिषाः ।
सामर्थ्यवन्तः संबन्धाद्गोमन्तं समुपाश्रिताः ॥ ५४ ॥
त्रियोजनायतं सद्म त्रिस्कन्धं योजनावधि ।
योजनान्ते शतद्वारं वीरविक्रमतोरणम् ॥ ५५ ॥
अष्टादशावरैर्नद्धं क्षत्रियैर्युद्धदुर्मदैः ।
अष्टादशसहस्राणि भ्रातॄणां सन्ति नःकुले ॥ ५६ ॥
आहुकस्य शतं पुत्रा एकैकस्त्रिदशावरः ।
चारुदेष्णः सह भ्रात्रा चक्रदेवोऽथ सात्यकिः ॥ ५७ ॥
अहं च रौहिणेयश्च साम्बः प्रद्युम्न एव च ।
एवमेते रथाः सप्त राजन्नन्यान्निबोध मे ॥ ५८ ॥
कृतवर्मा ह्यनाधृष्टिः समीकः समितिंजयः ।
कङ्कः शङ्कुश्च कुन्तिश्च सप्तैते वै महारथाः ॥ ५९ ॥
पुत्रौ चाऽन्धकभोजस्य वृद्धो राजा च ते दश ।
वज्रसंहनना वीरा वीर्यवन्तो महारथाः ॥ ६० ॥
स्मरन्तो मध्यमं देशं वृष्णिमध्ये व्यवस्थिताः ।
स त्वं सम्राड्गुणैर्युक्तः सदा भरतसत्तम ! ॥ ६१ ॥

हाथ से उबरा हुआ समझ कर, बड़े आनन्द से उस गढ़ में रहते हैं। इस प्रकार प्रबल प्रतापी जरासन्ध के अत्याचार से हैरान होकर हम बलवान् होने पर भी निरे असमर्थ की तरह भागकर रैवतक पर्वत के आश्रय में जाकर ठहरे हैं। वह पर्वत इक्कीस योजन लम्बा और एक योजन ऊँचा है और उसमें तीन शिखर हैं। योजन योजन भर पर सौ-सौ सैन्यव्यूह और सौ-सौ द्वार बने हुए हैं। वीर पुरुषों का पराक्रम ही उस गढ़ का प्रधान फाटक है। अठारहों यादव कुलों के योद्धा क्षत्रिय उस गढ़ के रक्षक हैं॥५२।५६॥

हे युधिष्ठिर ! हमारे कुल में अठारह सहस्र भाई पैदा हुए हैं और आहुक के सौ पुत्र देवताओं के समान बलवान् हैं। यादवों में चारुदेष्ण, उसका छोटा भाई चक्रदेव, सात्यकि, मैं, बलभद्र, साम्ब, और प्रद्युम्न, ये सात अतिरथी हैं। इनके सिवाय कृतवर्मा, अनाधृष्टि, समीक, समितिञ्जय, कङ्क, शङ्कु और कुन्ति, ये सात महारथी हैं; अन्धकभोज के दो पुत्र और वृद्ध राजा उग्रसेन आदि दस महारथी जिनके शरीर वज्र के तुल्य हैं बड़े पराक्रमी हैं। ये जरासन्ध के विरोधी और हमारे साथी हैं। हे पाण्डव ! आपमें सम्राट् के सब गुण विद्यमान हैं। आप बिना विरोध के विशाल साम्राज्य भोग सकेंगे। क्षत्रियों

क्षत्रे सम्राजमात्मानं कर्तुमर्हसि भारत! ।
न तु शक्यं जरासन्धे जीवमाने महाबले ॥ ६२ ॥
राजसूयस्त्वयाऽवाप्तुमेषा राजन्! मतिर्मम ।
तेन रुद्धा हि राजानः सर्वे जित्वा गिरिव्रजे ॥ ६३ ॥
कन्दरे पर्वतेन्द्रस्य सिंहेनेव महाद्विपाः ।
स हि राजा जरासन्धो यियक्षुर्वसुधाधिपः ॥ ६४ ॥
महादेवं महात्मानमुमापतिमरिन्दम ! ।
आराध्य तपसोग्रेण निर्जितास्तेन पार्थिवाः ॥ ६५ ॥
प्रतिज्ञायाश्च पारं स गतः पार्थिवसत्तम ! ।
स हि निर्जित्य निर्जित्य पार्थिवान्पृतनागतान् ॥ ६६ ॥
पुरमानीय बध्वा च चकार पुरुषव्रजम् ।
वयं चैव महाराज ! जरासन्धभयात्तदा ॥ ६७ ॥
मथुरां संपरित्यज्य गता द्वारवतीं पुरीम् ।
यदि त्वेनं महाराज! यज्ञं प्राप्तुमभीप्ससि ॥ ६८ ॥
यतस्व तेषां मोक्षाय जरासन्धवधाय च ।
समारम्भो न शक्योऽयमन्यथा कुरुनन्दन ! ॥ ६९ ॥
राजसूयस्य कार्त्स्न्येन कर्तु मतिमतां वर! ।

के मध्य आपका सम्राट् होना अत्यन्त आवश्यक है ॥५७।६२॥

किन्तु मेरी मति से जब तक राजा जरासन्ध जीता है तबतक आप राजसूय यज्ञ नहीं कर सकते हैं। सिंह जैसे सहज ही हाथियों पर हमला करके उन्हें पर्वत की खोह में बन्दकर रक्खे, वैसे ही जरासन्ध ने बहुत से राजाओं को युद्ध में हराकर अपने गढ़ के भीतर कैद कर रक्खा है। पूर्व समय में जरासन्ध ने, राजाओं की बलि देकर यज्ञ करने की इच्छा से, भगवान् शङ्कर की आराधना की थी। फिर आशुतोष भोलानाथ की कृपा पाकर वह अपनी प्रतिज्ञा पूरी कर चुका है, क्योंकि उसने अनेक राजाओं को जीतकर बलिदान के लिये कैद कर रक्खा है। दिग्विजय के लिये निकलकर वह जीते हुए राजाओं को पकड़ लाकर कैद करने लगा था ॥६३।६७॥

यह देखकर हम भय के मारे मथुरा पुरी छोड़ कर द्वारका नगरी को भाग गये। इसलिये हे कुरु-नन्दन ! जो आपको राजसूय यज्ञ करने की बड़ी ही अभिलाषा हो तो पहले दुष्ट दुर्जय जरासन्ध को मारकर कैद किये गये राजाओं को छुड़ाइए। यह किये बिना आपकी राजसूय यज्ञ करने की इच्छा

इत्येषा मे मती राजन्! यथा वा मन्यसेऽनघ!।
एवं गते ममाऽऽचक्ष्व स्वयं निश्चित्य हेतुभिः ॥ ७० ॥

इति श्रीमन्महाभारते सभापर्वणि राजसूयारम्भपर्वणि श्रीकृष्णवाक्यं चतुर्दशोऽध्यायः ॥ १४ ॥

किसी तरह पूरी नहीं हो सकती। यदि राजसूय यज्ञ करना आपको बहुत पसन्द है तो पहले मेरी विचार में यही करना चाहिए। अब देश, काल, कार्य और कारण का विचार तथा निश्चय करके आपको जो उचित जान पड़े वह कीजिए ॥६८।७०॥

— * —

सभापर्व का चौदहवाँ अध्याय समाप्त हुआ ॥१४॥

अथ पञ्चदशोऽध्यायः ॥ १५ ॥

युधिष्ठिर उवाच—उक्तं त्वया बुद्धिमता यन्नान्यो वक्तुमर्हति ।
संशयानां हि निर्मोक्ता त्वन्नाऽन्यो विद्यते भुवि ॥ १ ॥
गृहे गृहे हि राजानः स्वस्य स्वस्य प्रियंकराः ।
न च साम्राज्यमाप्तास्ते सम्राट्शब्दो हि कृच्छ्रभाक्॥ २ ॥
कथं परानुभावज्ञः स्वं प्रशंसितुमर्हति ।
परेण समवेतस्तु यः प्रशस्यः स पूज्यते ॥ ३ ॥
विशाला बहुला भूमिर्बहुरत्नसमाचिता ।
दूरं गत्वा विजानाति श्रेयो वृष्णिकुलोद्वह ! ॥ ४ ॥
शममेव परं मन्ये शमात्क्षेमं भवेन्मम ।
आरम्भे पारमेष्ठ्यं तु न प्राप्यमिति मे मतिः ॥ ५ ॥

पन्द्रहवाँ अध्याय ॥ १५ ॥

श्रीकृष्ण के ये वचन सुनकर युधिष्ठिर ने कहा—हे महाराज! आपकी बुद्धि बहुत ही उज्ज्वल और तीक्ष्ण है, आपकी विवेकबुद्धि अलौकिक है। आपके उपदेश का खण्डन नहीं हो सकता। आप ही एकमात्र इस जगत् भर के संशय को दूर करनेवाले योगीश्वर हो। इस पृथ्वीमण्डल पर अपने अपने कार्य में लगे हुए अनेकों राजा महाराजा हैं, किन्तु कोई भी सम्राट् के पद को नहीं पा सकता। सम्राट् का पद मिलना अत्यन्त ही दुर्लभ है। जो मनुष्य दूसरे के प्रभाव को नहीं जानता है वह अपनी बड़ाई क्योंकर कर सकता है। जो रणभूमि में पहुँचकर शत्रु की सेना पर बेधड़क आक्रमण करके उसे हरा सकता है वही प्रशंसा का पात्र है। हे वृष्णिवंशावतंस! नाना प्रकार के रत्नों से पूर्ण इस विशाल वसुन्धरा में कोई अभिज्ञता के बिना श्रेय को नहीं प्राप्त कर सकता। मेरी समझ में शान्ति में ही सब भलाइयाँ मिलती हैं। इसलिये शान्ति की सेवा ही मेरे लिये निधि और मेरा कर्त्तव्य कर्म है। राजसूय महायज्ञ आरम्भ करके अन्त को परम सुखदायक फल पाने की आशा करना दुराशामात्र है। हमारे वंश के सब

एवमेते हि जानन्ति कुले जाता मनस्विनः ।
कश्चित्कदाचिदेतेषां भवेच्छ्रेष्ठो जनार्दन ! ॥ ६ ॥
वयं चैव महाभाग ! जरासन्धभयात्तदा ।
शङ्किताः स्म महाभाग ! दौरात्म्यात्तस्य चाऽनघ ! ॥ ७ ॥
अहं हि तव दुर्धर्षभुजवीर्याश्रयः प्रभो ।
नाऽऽत्मानं वलिनं मन्ये त्वयि तस्माद्विशङ्किते ॥ ८ ॥
त्वत्सकाशाच्च रामाच्च भीमसेनाच्च माधव ! ।
अर्जुनाद्वा महावाहो हन्तुं शक्यो न वेति वै ॥ ९ ॥
एवं जानन्हि वार्ष्णेय ! विमृशामि पुनः पुनः ।
त्वं मे प्रमाणभूतोऽसि सर्वकार्येषु केशव ! ।
तच्छ्रुत्वा चाऽब्रवीद्भीमो वाक्यं वाक्यविशारदः ॥ १० ॥
भीम उवाच—अनारम्भपरो राजा वल्मीक इव सीदति ।
दुर्वलश्चाऽनुपायेन वलिनं योऽधितिष्ठति ॥ ११ ॥
अतन्द्रितस्तु प्रायेण दुर्वलो वलिनं रिपुम् ।
जयेत्सम्यक्प्रयोगेण नित्यार्थानात्मनो हितान् ॥ १२ ॥
कृष्णे नयो मयि वलं जयः पार्थे धनञ्जये ।

राजाओं का भी यही सिद्धान्त रहा है। प्रतीत होता है, वे कभी सारी पृथ्वी को जीतकर वश में नहीं कर सके। दूसरे, दुष्ट जरासन्ध के उपद्रव को देखकर मुझे बड़ी शङ्का हो गई है। मुझे सदा आपके ही बाहु-बल की आशा और आपका ही भरोसा रहता है। फिर जब आपको जरासन्ध के भय से भागना पड़ा तब मेरा उसे मारकर राजसूय यज्ञ की आशा करना दुराशामात्र है। हे महाबाहो ! आप, बल्देव, भीमसेन और अर्जुन, इन चारों में से कोई क्या युद्ध में जरासन्ध को परास्त कर सकता और मार सकता है ? इस दुष्ट को मारने की मुझे सदा बड़ी चिन्ता रहती है। आपसे अधिक और मैं क्या कहूँ ! आप जो उपदेश करोगे उसके विरुद्ध मैं कभी कुछ न करूँगा। आप जिस राह पर चलाओगे उसी पर चलूँगा ॥१।१०॥

यह सुनकर भीमसेन ने कहा—हे महाराज ! जो राजा उद्योग को छोड़ बैठता है, अथवा दुर्बल और निरुपाय होकर प्रबल शत्रु से युद्ध करने लगता है, वह अवश्य ही मर मिटता है। इसके विपरीत जो बल में हीन राजा भी आलस्य और उपेक्षा के भाव को छोड़कर अच्छी नीति के द्वारा प्रबल शत्रु पर आक्रमण करता है, तो वह युद्ध में जय पाता है। हे राजन् ! हमारी मण्डली भर में श्रीकृष्ण से बढ़कर नीति को कोई नहीं जानता। मैं भी बलवान् हूं,

सोमधेयांश्च निर्जित्य प्रययावुत्तरामुखः ।
वत्सभूमिं च कौन्तेयो विजिग्ये बलवान्बलात् ॥ १० ॥
भर्गाणामधिपं चैव निषादाधिपतिं तथा ।
विजिग्ये भूमिपालांश्च मणिमत्प्रमुखान्बहून् ॥ ११ ॥
ततो दक्षिणमल्लांश्च भोगवन्तं च पर्वतम् ।
तरसैवाऽजयद्भीमो नाऽतितीव्रेण कर्मणा ॥ १२ ॥
शर्मकान्वर्मकांश्चैव व्यजयत्सान्त्वपूर्वकम् ।
वैदेहकं च राजानं जनकं जगतीपतिम् ॥ १३ ॥
विजिग्ये पुरुषव्याघ्रो नाऽतितीव्रेण कर्मणा ।
शकांश्च बर्बरांश्चैव अजयच्छद्मपूर्वकम् ॥ १४ ॥
वैदेहस्थस्तु कौन्तेय इन्द्रपर्वतमन्तिकात् ।
किरातानामाधिपतीनजयत्सप्त पाण्डवः ॥ १५ ॥
ततः सुह्मान्प्रसुह्मांश्च सपक्षानपि वीर्यवान् ।
विजित्य युधि कौन्तेयो *मागधानभ्यधाद्बली ॥ १६ ॥
दण्डं च दण्डधारं च विजित्य पृथिवीपतीन् ।
तैरेव सहितैः सर्वैर्गिरिव्रजमुपाद्रवत् ॥ १७ ॥
जारासन्धिं सान्त्वयित्वा करे च विनिवेश्य ह ।

भीमसेन उत्तर मुख को घूम पड़ा ॥५।९॥

उधर उसने वत्सभूमि, भर्गराज, निषादपति और मणिमान् आदि बहुत से राजाओं को अपने अनुगत बनाया। वहां से दक्षिण मल्ल देश और भोगवान् पर्वत के राजाओं को सहज में ही परास्त करता हुआ वह आगे बढ़ा। शर्मक और वर्मक राजा आप ही उसके अधीन हो गये। पुरुषसिंह भीमसेन ने विदेह देश के राजा जनक से अनायास ही 'कर' पाकर उन्हें अपने अनुगत बनाया। आगे बढ़कर उसने नीति-कौशल-पूर्वक शक और बर्बर जातियों को अपने अधीन किया ॥१०।१४॥

वैदेह देश में ही ठहरकर भीमसेन ने इन्द्रपर्वत के पास रहनेवाले किरात जाति के सात राजाओं को जीत लिया। वहां से सुह्म और प्रसुह्म देश के राजाओं को उनके सहायकों-सहित जीतकर महाबली भीमसेन मगध देश में पहुंचा। वहां दण्ड, दण्डधार आदि राजाओं को जीतकर उनको अपने साथ लिये हुए भीमसेन गिरिव्रज में पहुंचा। वहां जरासन्ध के पुत्र सहदेव को ढाढ़स बंधाकर, और उसे करद राजा बनाकर, अधीनस्थित सब राजाओं को साथ लिये हुए भीमसेन ने

* मगध देश के सब माण्डलिकों को 'कर' देओ, ऐसा कहा।

तैरेव सहितैः सर्वैः कर्णमभ्यद्रवद्बली ॥ १८ ॥
स कम्पयन्निव महीं बलेन चतुरङ्गिणा ।
युयुधे पाण्डवश्रेष्ठः कर्णेनाऽमित्रघातिना ॥ १९ ॥
स कर्णं युधि निर्जित्य वशे कृत्वा च भारत ! ।
ततो विजिग्ये बलवान्राज्ञः पर्वतवासिनः ॥ २० ॥
अथ मोदागिरौ चैव राजानं बलवत्तरम् ।
पाण्डवो बाहुवीर्येण निजघान महामृधे ॥ २१ ॥
ततः पुण्ड्राधिपं वीरं वासुदेवं महाबलम् ।
कौशिकीकच्छनिलयं राजानं च महौजसम् ॥ २२ ॥
उभौ बलभृतौ वीरावुभौ तीव्रपराक्रमौ ।
निर्जित्याऽऽजौ महाराज ! वङ्गराजमुपाद्रवत् ॥ २३ ॥
समुद्रसेनं निर्जित्य चन्द्रसेनं च पार्थिवम् ।
ताम्रलिप्तं च राजानं कर्वटाधिपतिं तथा ॥ २४ ॥
सुह्मानामधिपं चैव ये च सागरवासिनः ।
सर्वान्म्लेच्छगणांश्चैव विजिग्ये भरतर्षभः ॥ २५ ॥
एवं बहुविधान्देशान्विजित्य पवनात्मजः ।
वसु तेभ्य उपादाय लौहित्यमगमद्बली ॥ २६ ॥
स सर्वान्म्लेच्छनृपतीन्सागरानूपवासिनः ।
करमाहारयामास रत्नानि विविधानि च ॥ २७ ॥
चन्दनागुरुवस्त्राणि मणिमौक्तिककम्बलम् ।
काञ्चनं रजतं चैव विद्रुमं च महाधनम् ॥ २८ ॥

अङ्ग देश के राजा कर्ण के ऊपर चढ़ाई कर दी ॥१५।१८॥

चतुरङ्गिणी सेना के बोझ से पृथ्वी को कँपाते हुए बलवान् भीमसेन ने युद्ध में कर्ण को भी जीत कर वश में कर लिया। फिर उसने कई प्रबल पहाड़ी राजाओं को परास्त किया। आगे बढ़कर मोदा-पर्वत पर जाकर, उसने वहां के बहुत ही बली राजा को बाहु-युद्ध में मार डाला। अब पुण्ड्र नरेश वासुदेव, कौशिकी-कच्छ (जलप्रायदेश) के राजा, बङ्ग देश के समुद्रसेन और चन्द्रसेन, ताम्रलिप्त नरेश, कर्वट देश के राजा, सुह्माधिप और समुद्रतट के निवासी अनेक म्लेच्छों को जीतता हुआ भीमसेन लौहित्य देश में पहुँचा ॥१९।२५॥

इस प्रकार सब देशों को जीतते आ रहे भीमसेन

ते कोटिशतसंख्येन कौन्तेयं महता तदा ।
अभ्यवर्षन्महात्मानं धनवर्षेण पाण्डवम् ॥ २९ ॥
इन्द्रप्रस्थमुपागम्य भीमो भीमपराक्रमः ।
निवेदयामास तदा धर्मराजाय तद्धनम् ॥ ३० ॥

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि भीमप्राचीदिग्विजये त्रिंशोऽध्यायः ॥ ३० ॥

ने समुद्रतट के सब म्लेच्छ राजाओं से 'कर' के रूप में विविध विचित्र रत्न, चन्दन, अगुरु, वस्त्र, मणि, मोती, कम्बल, सोना, चांदी, मूंगे आदि बहुत से पदार्थ प्राप्त किये। पूर्व दिशा को अच्छी तरह जीतकर भीमसेन इन्द्रप्रस्थ को लौट आया। उसने वह सब धन युधिष्ठिर को अर्पण कर दिया ॥२९।३०॥

सभापर्व का तीसवां अध्याय समाप्त हुआ ॥ ३० ॥

अथ एकत्रिंशोऽध्यायः ॥ ३१ ॥

वैशम्पायन उवाच—तथैव सहदेवोऽपि धर्मराजेन पूजितः ।
महत्या सेनया राजन्प्रययौ दक्षिणां दिशम् ॥ १ ॥
स शूरसेनान्कार्त्स्न्येन पूर्वमेवाऽजयत्प्रभुः ।
मत्स्यराजं च कौरव्यो वशे चक्रे बलाद्बली ॥ २ ॥
अधिराजाधिपं चैव दन्तवक्त्रं महाबलम् ।
जिगाय करदं चैव कृत्वा राज्ये न्यवेशयत् ॥ ३ ॥
सुकुमारं वशे चक्रे सुमित्रं च नराधिपम् ।
तथैवाऽपरमत्स्यांश्च व्यजयत्स पटच्चरान् ॥ ४ ॥
निषादभूमिं गोशृङ्गं पर्वतप्रवरं तथा ।
तरसैवाऽजयद्धीमाञ्छ्रेणिमन्तं च पार्थिवम् ॥ ५ ॥

इकतीसवां अध्याय ॥ ३१ ॥

वैशम्पायन ने कहा—हे राजा जनमेजय! अब हम सहदेव के दिग्विजय का वृत्तान्त कहते हैं, जो महाराज युधिष्ठिर की आज्ञा से चतुरङ्गिणी सेना लेकर दक्षिण दिशा को गया था। उसने पहले शूरसेन और मत्स्य देश के राजाओं को युद्ध करके वश में किया। फिर राजा दंतवक्र को, जो सब राजाओं का अधिपति था, जीता। और उससे 'कर' देने का निबन्ध करके फिर उसे राजसिंहासन पर बैठा दिया और सुकुमार, सुमित्र नामी राजाओं और पटच्चरों-सहित मत्स्यों को विजय किया। वहां से चलकर सहदेव ने निषादभूमि-गोशृंग पर्वत और राजा श्रेणिमान् को पराजय किया। फिर नरराष्ट्र देश को जीतकर वह शीघ्र राजा कुन्तिभोज के देश में पहुँचा। कुन्तिभोज ने बड़ी प्रसन्नता से 'कर' देकर उसकी

नरराष्ट्रं च निर्जित्य कुन्तीभोजमुपाद्रवत् ।
प्रीतिपूर्वं च तस्याऽसौ प्रतिजग्राह शासनम् ॥ ६ ॥
ततश्चर्मण्वतीकूले जम्भकस्याऽऽत्मजं नृपम् ।
ददर्श वासुदेवेन शेषितं पूर्ववैरिणा ॥ ७ ॥
चक्रे तेन स संग्रामं सहदेवेन भारत ! ।
स तमाजौ विनिर्जित्य दक्षिणाभिमुखो ययौ ॥ ८ ॥
सेकानपरसेकांश्च व्यजयत्सुमहाबलः ।
करं तेभ्य उपादाय रत्नानि विविधानि च ॥ ९ ॥
ततस्तैनैव सहितो नर्मदामभितो ययौ ।
विन्दानुविन्दावावन्त्यौ सैन्येन महता वृतौ ॥ १० ॥
जिगाय समरे वीरावाश्विनेयः प्रतापवान् ।
ततो रत्नान्युपादाय पुरं भोजकटं ययौ ॥ ११ ॥
तत्र युद्धमभूद्राजन्दिवसद्वयमच्युतम् ।
स विजित्य दुराधर्षं भीष्मकं माद्रिनन्दनः ॥ १२ ॥
कोसलाधिपतिं चैव तथा वेणातटाधिपम् ।
कान्तारकांश्च समरे तथा प्राक्कोशलान्नृपान् ॥ १३ ॥
नाटकेयांश्च समरे तथा हेरम्बकान्युधि ।

अधीनता स्वीकार कर ली। फिर वह वहा से चलकर चर्मण्वती (चंबल) नदी के किनारे पहुँचा ॥१।६॥

वहाँ पहुँचकर जम्भक राजा के पुत्र के साथ उसने बड़ा भारी युद्ध किया। पहले के वैरी श्रीकृष्ण ने पहले ही युद्ध करके उसका बल घटा दिया था। उसे जीतकर सहदेव और आगे दक्षिण दिशा में बढ़ा। सेक और अपरसेक देशों के राजाओं को जीतकर उनसे 'कर' में सहदेव ने अमित धन और असङ्ख्य श्रेष्ठ रत्न प्राप्त किये। फिर उन सबको साथ लेकर वह नर्मदा नदी के किनारे पर पहुँचा। अवन्ती देश के राजा विन्द और अनुविन्द ने बहुत सी सेना लेकर सहदेव का सामना किया। उन्हें भी जीतकर उनसे बहुत से रत्न आदि लेकर वह भोजकट नाम नगर को गया ॥७।११॥

वहा दो दिन बराबर युद्ध करके उसने भीष्मक राजा को परास्त किया। वहा से कोशल-नरेश वेणा नदी की तटभूमि के राजा और कान्तारक लोगों को जीता। फिर प्राक्कोशल, नाटकेय, हेरम्बक, मारुध आदि राजाओं को युद्ध में पराजय किया। इसके पश्चात् सहदेव ने बलपूर्वक रम्यग्राम पर चढ़ाई की। वहां भी विजय पाकर वह आगे बढ़ा। और नाचीन, अर्बुक आदि जङ्गली राजाओं को युद्ध में हराकर उसने

मारुधं च विनिर्जित्य रम्यग्राममथो बलात् ॥ १४ ॥
नाचीनानर्बुकांश्चैव राज्ञश्चैव महाबलः ।
तांस्तानाटविकान्सर्वानजयत्पाण्डुनन्दनः ॥ १५ ॥
वाताधिपं च नृपतिं वशे चक्रे महाबलः ।
पुलिन्दांश्च रणे जित्वा ययौ दक्षिणतः पुरः ॥ १६ ॥
युयुधे पाण्ड्यराजेन दिवसं नकुलानुजः ।
तं जित्वा स महाबाहुः प्रययौ दक्षिणापथम् ॥ १७ ॥
गुहामासादयामास किष्किन्धां लोकविश्रुताम् ।
तत्र वानरराजाभ्यां मैन्देन द्विविदेन च ।
युयुधे दिवसान्सप्त न च तौ विकृतिं गतौ ॥ १८ ॥
ततस्तुष्टौ महात्मानौ सहदेवाय वानरौ ।
ऊचतुश्चैव संहृष्टौ प्रीतिपूर्वमिदं वचः ॥ १९ ॥
गच्छ पाण्डवशार्दूल ! रत्नान्यादाय सर्वशः ।
अविघ्नमस्तु कार्याय धर्मराजाय धीमते ॥ २० ।
ततो रत्नान्युपादाय पुरीं माहिष्मतीं ययौ ।
तत्र नीलेन राज्ञा स चक्रे युद्धं नरर्षभः ॥ २१ ॥
पाण्डवः परवीरघ्नः सहदेवः प्रतापवान् ।

अपने वश में कर लिया; आगे चल कर राजा वाताधिप और पुलिन्द लोगों को वश में किया॥११।१५॥

फिर एक दिन घोर युद्ध करके पाण्ड्य देश के राजा को अधीन बनाकर सहदेव दक्षिण दिशा में और आगे बढ़ा। वहां से वह लोकप्रसिद्ध किष्किन्धा गुफा के समीप पहुँचा, और वहां पर वानरों के मैंद और द्विविद नाम राजाओं से सात दिन तक युद्ध हुआ। सहदेव का शौर्य, वीर्य, साहस आदि देखकर वे वानर बहुत प्रसन्न हुए। उन्होंने सहदेव से कहा— हे पाण्डुनन्दन ! हम धर्मराज युधिष्ठिर के कार्य में विघ्न डालना नहीं चाहते ॥१६।२०॥

हम तुम्हें 'कर' के रूप में बहुत से श्रेष्ठ रत्न देते हैं: इन्हें लेकर तुम आगे जाओ। उनसे रत्न लेकर सहदेव आगे बढ़कर माहिष्मती पुरी में पहुँचा। उस नगरी के राजा पराक्रमी नील के साथ सहदेव को घमासान युद्ध करना पड़ा। वहां के घोर युद्ध में असंख्य सेना का नाश हो गया। प्राणों के लिये संशयजनक उस युद्ध में भगवान् अग्नि राजा नील के सहायक थे। अग्नि का कोप होने से सहदेव की सेना के रथ, घोड़े, हाथी, पैदल और उनके कवच जलते हुए चारों ओर दिखाई पड़ने लगे। यह देखकर सहदेव ने बहुत आश्चर्य माना। बहुत विचार करने

ततोऽस्य सुमहद्युद्धमासीद्भीरुभयङ्करम् ॥ २२ ॥
सैन्यक्षयकरं चैव प्राणानां संशयावहम् ।
चक्रे तस्य हि साहाय्यं भगवान्हव्यवाहनः ॥ २३ ॥
ततो रथा हया नागाः पुरुषाः कवचानि च ।
प्रदीप्तानि व्यदृश्यन्त सहदेवबले तदा ॥ २४ ॥
ततः सुसंभ्रान्तमना बभूव कुरुनन्दनः ।
नोत्तरं प्रतिवक्तुं च शक्तोऽभूज्जनमेजय ! ॥ २५ ॥
जनमेजय उवाच- किमर्थं भगवान्वह्निः प्रत्यमित्रोऽभवद्युधि ।
सहदेवस्य यज्ञार्थं घटमानस्य वै द्विज ! ॥ २६ ॥
वैशम्पायन उवाच- तत्र माहिष्मतीवासी भगवान्हव्यवाहनः ।
श्रूयते हि गृहीतो वै पुरस्तात्पारदारिकः ॥ २७ ॥
नीलस्य राज्ञो दुहिता बभूवाऽतीव शोभना ।
साऽग्निहोत्रमुपातिष्ठद्बोधनाय पितुः सदा ॥ २८ ॥
व्यजनैर्धूयमानोऽपि तावत्प्रज्वलते न सः ।
यावच्चारुपुटोष्ठेन वायुना न विधूयते ॥ २९ ॥
ततः स भगवानग्निश्चकमे तां सुदर्शनाम् ।
नीलस्य राज्ञः सर्वेषामुपनीतश्च सोऽभवत् ॥ ३० ॥

पर भी उस समय उसे इस आपत्ति से बचने का कोई उपाय न देख पड़ा ॥२१।२५॥

यह सुनकर राजा जनमेजय ने वैशम्पायन जी से पूछा—हे महाराज ! सहदेव तो अग्नि में ही यज्ञ करने के लिये यत्न कर रहा था, फिर किस कारण से अग्नि ने सहदेव की सेना को जलाया ? यह सुनकर वैशम्पायन जी बोले—सुना जाता है कि राजा नील की एक परम रूपवती सर्वाङ्ग-सुन्दरी कन्या थी। राजा उसको अग्निहोत्र के समय अपने पास लेकर इस कारण से बैठा करता था, कि जबतक वह कन्या अपने होठों से फूँक नहीं मारती थी, तबतक पँखे की भी वायु से अग्नि नहीं जलती थी। अग्निदेव उस कन्या के स्वरूप को देखकर ऐसे कामासक्त हो गये कि सुन्दर ब्राह्मण का रूप धारण कर उस कन्या से इच्छापूर्वक रमण करने लगे ॥२६।३०॥

जब अग्निदेव राजा का अनादर करके उनके यहां और अन्य नगरवासियों के यहां भी जाकर मनमाना आचरण करने लगे और राजा को यह सूचना मिली, तब धार्मिक राजा ने कुपित होकर ब्राह्मण का रूप धारण करनेवाले अग्नि को, शास्त्र की विधि के अनुसार, दण्ड देने का उद्योग किया। इससे रुष्ट होकर अग्निदेव प्रलयकाल के समान भयानक रूप लेकर

ततो ब्राह्मणरूपेण रममाणो यदृच्छया ।
चकमे तां वरारोहां कन्यामुत्पललोचनाम् ॥ ३१ ॥
तं तु राजा यथाशास्त्रमशासद्धार्मिकस्तदा ।
प्रजज्वाल ततः कोपाद्भगवान्हव्यवाहनः ॥ ३२ ॥
तं दृष्ट्वा विस्मितो राजा जगाम शिरसाऽवनिम् ।
ततः कालेन तां कन्यां तथैव हि तदा नृपः ॥ ३३ ॥
प्रददौ विप्ररूपाय वह्नये शिरसा नतः ।
प्रतिगृह्य च तां सुभ्रूं नीलराज्ञः सुतां तदा ॥ ३४ ॥
चक्रे प्रसादं भगवांस्तस्य राज्ञो विभावसुः ।
वरेण च्छन्दयामास तं नृपं स्विष्टकृत्तमः ॥ ३५ ॥
अभयं च स जग्राह स्वसैन्ये वै महीपतिः ।
ततः प्रभृति ये केचिदज्ञानात्तां पुरीं नृपाः ॥ ३६ ॥
जिगीषन्ति बलाद्राजंस्ते दह्यन्ते स्म वह्निना ।
तस्यां पुर्यां तदा चैव माहिष्मत्यां कुरूद्वह ! ॥ ३७ ॥
बभूवुरनतिग्राह्या योषितश्छन्दतः किल ।
एवमग्निर्वरं प्रादात्स्त्रीणामप्रतिवारणे ॥ ३८ ॥
स्वैरिण्यस्तत्र नार्यो हि यथेष्टं विचरन्त्युत ।

राजा के राज्य में प्रज्वलित हो उठे। यह आश्चर्य घटना देखकर राजा डर गया। वह अग्नि की शरण में आया और दण्डवत् प्रणाम करके उन्हें शान्त करने की चेष्टा करने लगा। राजा ने ब्राह्मण-रूपधारी अग्नि के साथ उस कन्या का विवाह कर दिया। उस कन्या को पाकर, अग्निदेव बहुत प्रसन्न और शान्त हुए और राजा नील पर कृपा करके कहने लगे कि जो कुछ इच्छा हो सो वरदान मांगो। यह सुनकर राजा नील ने कहा—हे महाराज ! कोई भी शत्रु मुझपर चढ़ाई करके मेरा कुछ अनिष्ट न कर सके। किसी शत्रु से मुझे और मेरी सेना को कोई भय न हो ॥३१।३६॥

'ऐसा ही होगा' कहकर अग्निदेव अन्तर्द्धान हो गये। हे राजन् ! उस समय से जो कोई राजा बिना जाने उस पुरी को जीतने की इच्छा से जाता था उस को सेना-सहित अग्निदेव भस्म कर देते थे। [ इसी कारण जय की आशा से कोई राजा माहिष्मती-पुरी पर चढ़ाई करने की हिम्मत नहीं करता था। ] नील राजा की कन्या से अग्नि का विवाह हो चुकने पर स्त्रियाँ, अग्नि के वरदान से स्वेच्छाचारिणी हो गईं। तब से वहां की स्त्रियां स्वैरिणी रहती हैं और राजा लोग अग्नि के भय से उस पुरी को विजय करने

वर्जयन्ति च राजानस्तत्पुरं भरतर्षभ ॥ ३९ ॥
भयादग्नेर्महाराज तदा प्रभृति सर्वदा ।
सहदेवस्तु धर्मात्मा सैन्यं दृष्ट्वा भयार्दितम् ॥ ४० ॥
परीतमग्निना राजन्नाऽकम्पत यथाऽचलः ।
उपस्पृश्य शुचिर्भूत्वा सोऽब्रवीत्पावकं ततः ॥ ४१ ॥
सहदेव उवाच—त्वदर्थोऽयं समारम्भः कृष्णवर्त्मन्नमोऽस्तु ते ।
मुखं त्वमसि देवानां यज्ञस्त्वमसि पावक ! ॥ ४२ ॥
पावनात्पावकश्चाऽसि वहनाद्धव्यवाहनः ।
वेदास्त्वदर्थं जाता वै जातवेदास्ततो ह्यसि ॥ ४३ ॥
चित्रभानुः सुरेशश्च अनलस्त्वं विभावसो ।
स्वर्गद्वारस्पृशश्चाऽसि हुताशो ज्वलनः शिखी ॥ ४४ ॥
वैश्वानरस्त्वं पिङ्गेशः प्लवङ्गो भूरितेजसः ।
कुमारसूस्त्वं भगवान्रुद्रगर्भो हिरण्यकृत् ॥ ४५ ॥
अग्निर्ददातु मे तेजो वायुः प्राणं ददातु मे ।
पृथिवी बलमादध्याच्छिवं चाऽऽपो दिशन्तु मे ॥ ४६ ॥
अपांगर्भ ! महासत्त्व ! जातवेदः ! सुरेश्वर ! ।
देवानां मुखमग्ने ! त्वं सत्येन विपुनीहि माम् ॥ ४७ ॥

को नहीं जाते हैं। सो हे राजा जनमेजय ! अपनी सेना को अग्नि में जलती हुई देखकर सहदेव तनिक भी विचलित नहीं हुआ, किन्तु शुद्ध होकर आचमन करके अग्नि की स्तुति करने लगा॥३७४१॥

हे अग्निदेव ! यह दिग्विजय का उद्योग यज्ञ करके आप की ही आराधना के लिये किया जा रहा है। आप देवताओं के पवित्र मुख हैं। यज्ञ भी आपका ही रूप है। आप का नाम पवित्र होने के कारण से पावक और हव्य को धारण करने से हव्यवाहन है। वेद आप ही (यज्ञ) के लिये उत्पन्न हुए है,इसी से आप का नाम 'जातवेदा' है। आपको चित्रभानु, सुरेश, अनल, विभावसु, आकाश को स्पर्श करनेवाला, हुताशन, ज्वलन, शिखि, वैश्वानर, पिंगेश, प्लवङ्ग, भूरितेजा, कार्तिकेय कुमार का उत्पत्तिस्थान, भगवान् रुद्रगर्भ और हिरण्यरेता आदि नामों से लोग पूजते हैं। मुझे आप अग्निरूप से तेज, वायुरूप से प्राण, पृथ्वीरूप से बल और जलरूप से कल्याण दीजिये। हे भगवन् ! जल की उत्पत्ति आप से ही हुई है। आप महासत्त्व और श्रेष्ठतत्त्व हैं। आप देवताओं में श्रेष्ठ, देवताओं का मुख और पवित्र रूप हैं। आप सत्य के द्वारा मुझे पवित्र कीजिए। ऋषि, ब्राह्मण, देवता और असुर आदि नित्य हवन करके आप की आराधना करते हैं।

ऋषिभिर्ब्राह्मणैश्चैव दैवतैरसुरैरपि ।
नित्यं सुहुत ! यज्ञेषु सत्येन विपुनीहि माम्. ॥ ४८ ॥
धूमकेतुः शिखी च त्वं पापहाऽनिलसंभवः ।
सर्वप्राणिषु नित्यस्थः सत्येन विपुनीहि माम् ॥ ४९ ॥
एवं स्तुतोऽसि भगवन्प्रीतेन शुचिना मया ।
तुष्टिं पुष्टिं श्रुतं चैव प्रीतिं चाऽग्ने ! प्रयच्छ मे ॥ ५० ॥
वैशम्पायन उवाच- इत्येवं मन्त्रमाग्नेयं पठन्यो जुहुयाद्विभुम् ।
ऋद्धिमान्सततं दान्तः सर्वपापैः प्रमुच्यते ॥ ५१ ॥
सहदेव उवाच—यज्ञविघ्नमिमं कर्तुं नार्हस्त्वं हव्यवाहन ! ।
एवमुक्त्वा तु माद्रेयः कुशैरास्तीर्य मेदिनीम् ॥ ५२ ॥
विधिवत्पुरुषव्याघ्रः पावकं प्रत्युपाविशत् ।
प्रमुखे तस्य सैन्यस्य भीतोद्विग्नस्य भारत ! ॥ ५३ ॥
न चैनमत्यगाद्वह्निर्वेलामिव महोदधिः ।
तमुपेत्य शनैर्वह्निरुवाच कुरुनन्दनम् ॥ ५४ ॥
सहदेवं नृणां देवं सान्त्वपूर्वमिदं वचः ।
उत्तिष्ठोत्तिष्ठ कौरव्य ! जिज्ञासेयं कृता मया ॥ ५५ ॥
वेद्मि सर्वमभिप्रायं तव धर्मसुतस्य च ।

धूमकेतु, शिखी, पापनाशक, वायु से उत्पन्न, सब प्राणियों में नित्य स्थित आदि नामों और गुणों से सब लोग आपकी स्तुति करते हैं। आप सत्य के द्वारा मुझे पवित्र कीजिए। हे महाराज! मैं प्रीतिपूर्वक आपकी स्तुति करता हूँ। आप मुझे वृद्धि, प्रीति, ज्ञान और सुख दीजिए ॥४२।५०॥

वैशम्पायन ने कहा—हे राजा जनमेजय! सहदेव ने इस आग्नेय मन्त्राष्टक से अग्नि की स्तुति की। जो मनुष्य जितेन्द्रिय होकर इन मन्त्रों से अग्नि में हवन करता है, उसके सब पाप दूर हो जाते हैं। स्तुति करने के पीछे सहदेव अग्निदेव से बोला—हे अग्निदेव! महाराज युधिष्ठिर के यज्ञ में विघ्न डालना आपको उचित नहीं। पुरुषसिंह सहदेव कुशासन बिछाकर डरी और घबराई हुई अपनी सेना के आगे अग्नि के निकट ही बैठ गया। यह देखकर अग्नि आगे को इस प्रकार से नहीं बढ़ी, जैसे समुद्र अपनी मर्यादा से आगे को नहीं बढ़ता है ॥५१।५४॥

और फिर अग्निदेव ने उसके पास आकर सांत्वपूर्वक धीरे से कहा कि हे सहदेव! उठ खड़ा हो। मैं तेरे और महाराज युधिष्ठिर के अभिप्राय को जानता हूँ। परन्तु इस पुरी की रक्षा करना मुझको उस समय तक अवश्य है, जब तक राजा नील का

मया तु रक्षितव्येयं पुरी भरतसत्तम ! ॥ ५६ ॥
यावद्राज्ञो हि नीलस्य कुले वंशधरा इति ।
ईप्सितं तु करिष्यामि मनसस्तव पाण्डव ! ॥ ५७ ॥
तत उत्थाय हृष्टात्मा प्राञ्जलिः शिरसा नतः ।
पूजयामास माद्रेयः पावकं भरतर्षभ ! ॥ ५८ ॥
पावके विनिवृत्ते तु नीलो राजाऽभ्यगात्तदा ।
पावकस्याऽऽज्ञया चैनमर्चयामास पार्थिवः ॥ ५९ ॥
सत्कारेण नरव्याघ्रं सहदेवं युधां पतिम् ।
प्रतिगृह्य च तां पूजां करे च विनिवेश्य च ।
माद्रीसुतस्ततः प्रायाद्विजयी दक्षिणां दिशम् ॥ ६० ॥
त्रैपुरं स्ववशे कृत्वा राजानममितौजसम् ।
निजग्राह महाबाहुस्तरसा पौरवेश्वरम् ॥ ६१ ॥
आकृतिं कौशिकाचार्यं यत्नेन महता ततः ।
वशे चक्रे महाबाहुः सुराष्ट्राधिपतिं तदा ॥ ६२ ॥
सुराष्ट्रविषयस्थश्च प्रेषयामास रुक्मिणे ।
राज्ञे भोजकटस्थाय महामात्राय धीमते ॥ ६३ ॥
भीष्मकाय स धर्मात्मा साक्षादिन्द्रसखाय वै ।

यहां वंश रहेगा। तू उठ, मैं तेरी मनोकामना को पूरा करूँगा। यह सुनकर सहदेव बड़ा प्रसन्न हुआ और हाथ जोड़कर नम्रता से अग्नि का पूजन किया ॥५५।५९॥

अग्नि के शांत हो जाने पर, उनकी आज्ञा के अनुसार, राजा नील ने सहदेव की अधीनता स्वीकार कर ली। वह उससे आकर मिला और 'कर' के रूप में अनेक रत्न और धन देकर उसने वीर-श्रेष्ठ सहदेव की पूजा की। सहदेव विजय पाकर और आगे बढ़ा। दक्षिण दिशा में स्थित त्रिपुर-राज्य में पहुंचकर वहां के बड़े पराक्रमी राजा को उसने अपने अधीन किया। फिर पौरवेश्वर को जीतकर सुराष्ट्र देश के राजा कौशिकाचार्य आकृति को उसने बड़े युद्ध के उपरान्त अपने अधीन किया। सुराष्ट्र देश में ही ठहरकर सहदेव ने भोजकटपुर के राजा रुक्मी और राजा भीष्मक के पास जो इन्द्र का मित्र था, अपना दूत भेजा। अपने पुत्र रुक्मी-सहित भीष्मक ने प्रसन्नतापूर्वक युधिष्ठिर की अधीनता स्वीकार कर ली, और 'कर' के रूप में अनेक श्रेष्ठ रत्न अर्पण किये। उनके इस प्रकार अधीनता स्वीकार कर लेने का कारण यह भी था कि उनकी कन्या रुक्मिणी वासुदेव को ब्याही थी ॥६०।६६॥

स चाऽस्य प्रतिजग्राह ससुतः शासनं तदा ॥ ६४ ॥
प्रीतिपूर्वं महाराज ! वासुदेवमवेक्ष्य च ।
ततः स रत्नान्यादाय पुनः प्रायाद्युधां पतिः ॥ ६५ ॥
ततः शूर्पारकं चैव तालाकटमथापि च ।
वशे चक्रे महातेजा दण्डकांश्च महाबलः ॥ ६६ ॥
सागरद्वीपवासांश्च नृपतीन्म्लेच्छयोनिजान् ।
निषादान्पुरुषादांश्च कर्णप्रावरणानपि ॥ ६७ ॥
ये च कालमुखा नाम नरराक्षसयोनयः ।
कृत्स्नं कोल्लगिरिं चैव सुरभीपट्टनं तथा ॥ ६८ ॥
द्वीपं ताम्राह्वयं चैव पर्वतं रामकं तथा ।
तिमिङ्गिलं च स नृपं वशे कृत्वा महामतिः ॥ ६९ ॥
एकपादांश्च पुरुषान्केरलान्वनवासिनः ।
नगरीं संजयन्तीं च पाषण्डं करहाटकम् ॥ ७० ॥
दूतैरेव वशे चक्रे करं चैनानदापयत् ।
पाण्ड्यांश्च द्रविडांश्चैव सहितांश्चोण्ड्रकेरलैः ॥ ७१ ॥
अन्ध्रांस्तालवनांश्चैव कलिङ्गानुष्ट्रकर्णिकान् ।
आटवीं च पुरीं रम्यां यवनानां पुरं तथा ॥ ७२ ॥

यहां से आगे बढ़कर शूर्पारक, तालाकटक, दण्डक आदि के पास जाकर उन्हें महाबली सहदेव ने अपने अधीन बनाया। फिर समुद्र के टापुओं में और किनारे पर रहनेवाले म्लेच्छ राजाओं को, नर-मांस खानेवाले निषादों को और कर्ण-प्रावरण, कालमुख आदि मनुष्यरूप-धारी राक्षसों को भी जीतकर उन्होंने वश में किया। सम्पूर्ण कोल्लगिरि सुरभीपट्टन, ताम्राह्वय-द्वीप, रामपर्वत आदि अनेक स्थानों पर अपना अधिकार जमाते हुए सहदेव ने तिमिङ्गिल नाम के राजा को जीता, और उस से 'कर' लिया। उपरान्त दूतों को ही भेजकर एक-पाद पुरुषों, वन के रहनेवाले केरल जाति के लोगों, सञ्जयन्ती नगरी के राजा और पाषण्ड देश तथा करहाटक देश के राजा को सहदेव ने अपने अनुगत बना लिया। पाण्ड्य, द्राविड़, उण्ड्र-केरल, अन्ध्र, तालवन, कलिङ्ग, उष्ट्रकर्णिक, आटवी नाम रम्यपुरी और यवनों की नगरी में दूत भेजकर उनसे भी अनायास कर ले लिया ॥६७।७१॥

समुद्र-तट के कच्छ देश में पहुँचकर सहदेव ने पुलस्त्यवंशी राजा विभीषण के पास अपना दूत भेजा। महात्मा विभीषण ने प्रसन्नतापूर्वक युधिष्ठिर के शासन को स्वीकार कर लिया और 'कर' के रूप में अनेक रत्न, चन्दन और अगुरु की सुगन्धित लकड़ियां तथा

दूतैरेव वशे चक्रे करं चैनानदापयत् ।
ततः कच्छगतो धीमान्दूतान्माद्रवतीसुतः ॥ ७३ ॥
प्रेपयामास राजेन्द्र ! पौलस्त्याय महात्मने ।
विभीषणाय धर्मात्मा प्रीतिपूर्वमरिन्दमः ॥ ७४ ॥
स चास्य प्रतिजग्राह शासनं प्रीतिपूर्वकम् ।
तच्च कालकृतं धीमानभ्यमन्यत स प्रभुः ॥ ७५ ॥
ततः संप्रेषयामास रत्नानि विविधानि च ।
चन्दनागुरुकाष्ठानि दिव्यान्याभरणानि च ॥ ७६ ॥
वासांसि च महार्हाणि मणींश्चैव महाधनान् ।
न्यवर्तत ततो धीमान्सहदेवः प्रतापवान् ॥ ७७ ॥
एवं निर्जित्य तरसा सान्त्वेन विजयेन च ।
करदान्पार्थिवान्कृत्वा प्रत्यागच्छदरिंदमः ॥ ७८ ॥
धर्मराजाय तत्सर्वं निवेद्य भरतर्षभः ।
कृतकर्मा सुखं राजन्नुवास जनमेजय ! ॥ ७९ ॥

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि सहदेवदक्षिणदिग्विजये एकत्रिंशोऽध्यायः ॥ ३१ ॥

दिव्य आभरण एवं बड़े कीमती वस्त्र भेजकर सहदेव का सत्कार किया। हे महाराज ! पराक्रमी सहदेव इस प्रकार वीरता और विनय के द्वारा दक्षिण दिशा के सब राजाओं को जीतकर इन्द्रप्रस्थ को लौट आया। वहां आकर जय के द्वारा प्राप्त हुआ सब अपरिमित धन और श्रेष्ठ सामग्री उसने धर्मराज युधिष्ठिर को अर्पण कर दी। धर्मराज ने प्रसन्न होकर उनका उचित सत्कार किया। इसके उपरान्त सहदेव अपने भवन को गये ॥७२।७९॥

— * —

सभापर्व का इकतीसवां अध्याय समाप्त हुआ ॥ ३१ ॥

अथ द्वात्रिंशोऽध्यायः ॥ ३२ ॥

वैशम्पायन उवाच- नकुलस्य तु वक्ष्यामि कर्माणि विजयं तथा ।
वासुदेवजितामाशां यथाऽसावजयत्प्रभुः ॥ १ ॥

बत्तीसवां अध्याय ॥ ३२ ॥

वैशम्पायन ने कहा-हे राजा जनमेजय! अब मैं नकुल के दिग्विजय का वर्णन करता हूँ। एक बार वासुदेव श्रीकृष्ण ने पश्चिम दिशा के राजाओं को जीत लिया था। राजा युधिष्ठिर से विदा होकर

निर्याय खाण्डवप्रस्थात्प्रतीचीमभितो दिशम् ।
उद्दिश्य मतिमान्प्रायान्महत्या सेनया सह ॥ २ ॥
सिंहनादेन महता योधानां गर्जितेन च ।
रथनेमिनिनादैश्च कम्पयन्वसुधामिमाम् ॥ ३ ॥
ततो बहुधनं रम्यं गवाढ्यं धनधान्यवत् ।
कार्तिकेयस्य दयितं रोहीतकमुपाद्रवत् ॥ ४ ॥
तत्र युद्धं महच्चाऽऽसीच्छूरैर्मत्तमयूरकैः ।
मरुभूमिं च कार्त्स्न्येन तथैव बहुधान्यकम् ॥ ५ ॥
शैरीषकं महेत्थं च वशे चक्रे महाद्युतिः ।
आक्रोशं चैव राजर्षिं तेन युद्धमभून्महत् ॥ ६ ॥
तान्दशार्णान्स जित्वा च प्रतस्थे पाण्डुनन्दनः ।
शिबींस्त्रिगर्तानम्बष्ठान्मालवान्पञ्च कर्पटान् ॥ ७ ॥
तथा मध्यमकेयांश्च वाटधानान्द्विजानथ ।
पुनश्च परिवृत्याऽथ पुष्करारण्यवासिनः ॥ ८ ॥
गणानुत्सवसङ्केतान्व्यजयत्पुरुषर्षभः ।
सिन्धुकूलाश्रिता ये च ग्रामणीया महाबलाः ॥ ९ ॥

बहुत सी सेना साथ लिये हुए अब नकुल उसी पश्चिम दिशा की ओर चला। उसकी सेना में योद्धाओं की गरज और रथों की झंझनाहट से बड़ा भयानक शब्द होता था। वह पहले बहुत धन-धान्य से पूर्ण, बड़े रमणीय, गाय आदि पशुओं से सम्पन्न और भगवान् कार्तिकेय को प्रिय रोहीतक पर्वत पर पहुँचा। वहां बड़े ही शूरवीर मत्तमयूर जाति के लोगों से नकुल का बड़ा युद्ध हुआ। अन्त में उसने उन दोनों को और मरुभूमि, शैरीषक और महेत्थ आदि पहाड़ों के राजाओं को अपने अधीन करके उनसे 'कर' लिया। इसके पीछे राजर्षि आक्रोश के साथ उन्हें घोर युद्ध करना पड़ा ॥१।६॥

उनसे भी 'कर' लेकर नकुल ने दशार्ण, शिबि, त्रिगर्त, अम्बष्ठ, मालव, पंचकर्पट, मध्यमक क्षत्रियों और वाटधान ब्राह्मणों को जीतकर उनसे 'कर' लिया। फिर नकुल ने पुष्कर वन में पहुँचकर उत्सव सङ्केत नाम की म्लेच्छ जातियों को परास्त किया। समुद्र के किनारे रहनेवाले महाबली ग्रामणीय लोगों को और सरस्वती नदी के आसपास रहनेवाले शूद्रों और अभीरों को उसने जीता। मछली पकड़कर उनसे निर्वाह करनेवालों को और अन्य पहाड़ी जातियों को भी हराकर नकुल ने उनसे 'कर' लिया। इसके पश्चात् उसने सारे पंचनद अर्थात् पंजाब देश को, अमर पर्वत के निवासियों को, उत्तर ज्योतिष देश

शूद्राभीरगणांश्चैव ये चाऽऽश्रित्य सरस्वतीम् ।
वर्तयन्ति च ये मत्स्यैर्ये च पर्वतवासिनः ॥ १० ॥
कृत्स्नं पञ्चनदं चैव तथैवाऽमरपर्वतम् ।
उत्तरज्योतिषं चैव तथा दिव्यकटं पुरम् ॥ ११ ॥
द्वारपालं च तरसा वशे चक्रे महाद्युतिः ।
रामठान्हारहूणांश्च प्रतीच्याश्चैव ये नृपाः ॥ १२ ॥
तान्सर्वान्स वशे चक्रे शासनादेव पाण्डवः ।
तत्रस्थः प्रेषयामास वासुदेवाय भारत ! ॥ १३ ॥
स चाऽस्य यादवैः सार्धं प्रतिजग्राह शासनम् ।
ततः शाकलमभ्येत्य मद्राणां पुटभेदनम् ॥ १४ ॥
मातुलं प्रीतिपूर्वेण शल्यं चक्रे वशे बली ।
स तेन सत्कृतो राज्ञा सत्काराहों विशांपते ! ॥ १५ ॥
रत्नानि भूरीण्यादाय संप्रतस्थे युधां पतिः ।
ततः सागरकुक्षिस्थान्म्लेच्छान्परमदारुणान् ॥ १६ ॥
पह्लवान्बर्बरांश्चैव किरातान्यवनाञ्छकान् ।
ततो रत्नान्युपादाय वशे कृत्वा च पार्थिवान् ॥ १७ ॥
न्यवर्तत कुरुश्रेष्ठो नकुलश्चित्रमार्गवित् ।
करभाणां सहस्राणि कोशं तस्य महात्मनः ॥ १८ ॥

को, दिव्यकट और द्वारपाल नाम के नगरों को भी, जीतकर उनके राजाओं से 'कर' लिया । आगे बढ़कर नकुल ने रामठ, हारहूण आदि पश्चिम देशी राजाओं को केवल आज्ञा देकर ही अपना अनुगत बना लिया ॥७।१३॥

फिर वासुदेव के पास नकुल ने अपना दूत भेजा । उन्होंने भी यादवों के साथ युधिष्ठिर के शासन को सादर स्वीकार कर लिया। वहा से वह मद्र देश में पहुँचा। वहा नकुल के मामा की नगरी थी। मद्र देश की राजधानी शाकलनगर में पहुँचकर मामा शल्य को भी नकुल ने अपने अधीन कर लिया । नकुल को शल्य ने बड़े आदरपूर्वक अनेक श्रेष्ठ रत्न दिये ॥१४।१६॥

वहा से चलकर नकुल ने समुद्र के भीतर टापुओं में रहनेवाले दारुण म्लेच्छों को, पह्लव, बर्बर, किरात, यवन और शक आदि जातियों को परास्त किया, और उनसे अनेक प्रकार के रत्न और बहुत सा धन प्राप्त किया । इस प्रकार सम्पूर्ण पश्चिम

ऊहुर्दश महाराज ! कृच्छ्रादिव महाधनम् ।
इन्द्रप्रस्थगतं वीरमभ्येत्य स युधिष्ठिरम् ॥ १९ ॥
ततो माद्रीसुतः श्रीमान्धनं तस्मै न्यवेदयत् ।
एवं विजित्य नकुलो दिशं वरुणपालिताम् ।
प्रतीचीं वासुदेवेन निर्जितां भरतर्षभः ॥ २० ॥

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि नकुलप्रतीचीजये द्वात्रिंशोऽध्यायः ॥ ३२ ॥
समाप्तं च दिग्विजयपर्व ।

दिशा को जीतकर दस हज़ार ऊँटों पर रत्न आदि पदार्थों को लादकर नकुल इन्द्रप्रस्थ नगर को लौटा। हे महाराज ! सब धन लाकर नकुल ने धर्मराज युधिष्ठिर को अर्पण किया। उन्होंने बहुत-प्रसन्न होकर उसका सत्कार किया ॥१७।२०॥

—*:*—

सभापर्व का बत्तीसवां अध्याय समाप्त हुआ ॥ ३२ ॥

अथ राजसूयपर्व ।

अथ त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

वैशम्पायन उवाच–रक्षणाद्धर्मराजस्य सत्यस्य परिपालनात् ।
शत्रूणां क्षपणाच्चैव स्वकर्मनिरताः प्रजाः ॥ १ ॥
बलीनां सम्यगादानाद्धर्मतश्चाऽनुशासनात् ।
निकामवर्षी पर्जन्यः स्फीतो जनपदोऽभवत् ॥ २ ॥
सर्वारम्भाः सुप्रवृत्ता गोरक्षा कर्षणं वणिक् ।
विशेषात्सर्वमेवैतत्संजज्ञे राजकर्मणः ॥ ३ ॥
दस्युभ्यो वञ्चकेभ्यो वा राजन्प्रति परस्परम् ।
राजवल्लभतश्चैव नाऽश्रूयन्त मृषा गिरः ॥ ४ ॥
अवर्षं चाऽतिवर्षं च व्याधिपावकमूर्च्छनम् ।

तेंतीसवां अध्याय ॥ ३३ ॥

वैशम्पायन ने कहा–हे राजा जनमेजय ! अब महाराज युधिष्ठिर, बड़े यत्न के साथ, शत्रुओं का विनाश करके प्रजा की रक्षा और सत्य का पालन करने लगे। उनकी प्रजा भी तन-मन से अपने कर्म करने लगी। न्यायपूर्वक 'कर' लेने और धर्म के अनुसार शासन करने से समय पर भरपूर वर्षा होती थी, और खूब अन्न उत्पन्न होता था। उसके कारण से उसके राज्य में बड़ी वृद्धि हुई। लोग गौओं की रक्षा, खेती और व्यापार आदि सब काम अच्छी तरह करने लगे। धर्मराज युधिष्ठिर ने ऐसा राज्य किया कि ठग, डाकू, चोर और राज-कर्मचारी आदि भी असत्य बोलने आदि निकृष्ट कामों से घृणा करने लगे ॥१।४॥

सर्वमेतत्तदा नासीद्धर्मनित्ये युधिष्ठिरे ॥ ५ ॥
प्रियं कर्तुमुपस्थातुं बलिकर्म स्वभावजम् ।
अभिहर्तुं नृपा जग्मुर्नाऽन्यैः कार्यैः कथंचन ॥ ६ ॥
धर्म्यैर्धनागमैस्तस्य ववृधे निचयो महान् ।
कर्तुं यस्य न शक्येत क्षयो वर्षशतैरपि ॥ ७ ॥
स्वकोष्ठस्य परीमाणं कोशस्य च महीपतिः ।
विज्ञाय राजा कौन्तेयो यज्ञायैव मनो दधे ॥ ८ ॥
सुहृदश्चैव ये सर्वे पृथक्च सह चाऽब्रुवन् ।
यज्ञकालस्तव विभो ! क्रियतामत्र सांप्रतम् ॥ ९ ॥
अथैवं ब्रुवतामेव तेषामभ्याययौ हरिः ।
ऋषिः पुराणो वेदात्माऽदृश्यश्चैव* विजानताम् ॥ १० ॥
जगतस्तस्थुषां श्रेष्ठः प्रभवश्चाऽप्ययश्च ह ।
भूतभव्यभवन्नाथः केशवः केशिसूदनः ॥ ११ ॥
प्राकारः सर्ववृष्णीनामापत्स्वभयदोऽरिहा ।
बलाधिकारे निक्षिप्य सम्यगानकदुन्दुभिम् ॥ १२ ॥
उच्चावचमुपादाय धर्मराजाय माधवः ।

उनके राज्य में वर्षा न होना अथवा अत्यन्त वर्षा होना, रोग-व्याधि, आग का लगना, अकाल-मृत्यु आदि किसी अशुभ घटना का नाम तक कहीं न सुन पड़ता था। राजा लोग युधिष्ठिर के पास 'कर' देने, अथवा उनका प्रिय कार्य करने, या पास बैठने को आया-जाया करते थे। कभी कोई राजा युद्ध आदि की इच्छा से नहीं आता था, और धर्म से लाये हुए धन से युधिष्ठिर का खज़ाना इतना बढ़ गया कि सैकड़ों वर्षों में भी वह खर्च नहीं हो सकता था। जब महाराज युधिष्ठिर ने अपने कोष को धन-धान्य और वस्त्रों से इतना बढ़ा हुआ देखा, तब उन्होंने यज्ञ करने का विचार किया। तब उनके इष्ट-मित्रों ने अलग-अलग, और मिलकर भी, उनसे कहा—हे महाराज ! अब यह आपके यज्ञ करने के लिये ठीक समय है। इसलिये शीघ्र ही राजसूय यज्ञ आरम्भ कर दीजिए। इस प्रकार सब लोग धर्मराज युधिष्ठिर से कह ही रहे थे कि इसी समय यज्ञेश्वर श्रीकृष्ण युधिष्ठिर के पास आये। सब के अन्तर्यामी, सब प्राणियों में आत्मारूप से स्थित, समदर्शी, दयालु, चराचर जगत् में सबसे श्रेष्ठ, पुराण ऋषि, वेदरूप, संसार की सृष्टि और संहार के कारण, भूत-वर्तमान और भविष्य इन तीनों कालों

* 'अविज्ञातं विजानतां विज्ञातमविजानताम्' इस श्रुति के अनुसार परमात्मा को ज्ञान का विषय समझनेवालों को अगम्य।

धनौघं पुरुषव्याघ्रो बलेन महता वृतः ॥ १३ ॥
तं धनौघमपर्यन्तं रत्नसागरमक्षयम् ।
नादयन्रथघोषेण प्रविवेश पुरोत्तमम् ॥ १४ ॥
पूर्णमापूरयंस्तेषां द्विषच्छोकावहोऽभवत् ।
असूर्यमिव सूर्येण निवातमिव वायुना ॥ १५ ॥
कृष्णेन समुपेतेन जहृषे भारतं पुरम् ।
तं मुदाऽभिसमागम्य सत्कृत्य च यथाविधि ॥ १६ ॥
स पृष्ट्वा कुशलं चैव सुखासीनं युधिष्ठिरः ।
धौम्यद्वैपायनमुखैर्ऋत्विग्भिः पुरुषर्षभः ।
भीमार्जुनयमैश्चैव सहितः कृष्णमब्रवीत् ॥ १७ ॥
युधिष्ठिर उवाच—त्वत्कृते पृथिवी सर्वा मद्वशे कृष्ण ! वर्तते ।
धनं च बहु वार्ष्णेय ! त्वत्प्रसादादुपार्जितम् ॥ १८ ॥
सोऽहमिच्छामि तत्सर्वं विधिवद्देवकीसुत ! ।
उपयोक्तुं द्विजाग्र्येभ्यो हव्यवाहे च माधव ! ॥ १९ ॥
तदहं यष्टुमिच्छामि दाशार्ह ! सहितस्त्वया ।
अनुजैश्च महाबाहो ! तन्माऽऽज्ञातुमिहार्हसि ॥ २० ॥

---

के नियामक, केशव, केशी दैत्य को मारनेवाले, यादवों की रक्षा करनेवाले आपत्तिकाल में अभय देनेवाले, शत्रुनाशन, पुरुषोत्तम श्रीकृष्ण द्वारका पुरी की रक्षा का भार वसुदेव जी को सौंपकर महाराज युधिष्ठिर को भेंट देने के लिये असङ्ख्य धन-रत्न लेकर इन्द्रप्रस्थ नगर में उपस्थित हुए । उनके साथ बहुत सेना भी आई । अपने रथ के पहियों की घरघराहट से दशों दिशाओं को प्रतिध्वनित करते हुए श्रीकृष्णचन्द्र ने जब खाण्डवप्रस्थ में प्रवेश किया, तब सब लोग उन्हें देखकर अत्यन्त ही प्रसन्न हुए। जहां सूर्य के दर्शन न होते हों, वहां सूर्योदय होने से, और जहां वायु का नाम तक न हो, वहां वायु चलने से जैसे मनुष्यों को अपार आनन्द प्राप्त होता है वैसे ही शत्रुओं के शोक को बढ़ानेवाले श्रीकृष्ण के आने से पाण्डवों को और पुरवासियों को बड़ी प्रसन्नता हुई ॥५।१६॥

राजा युधिष्ठिर ने बड़े आनन्दपूर्वक श्रीकृष्ण की अगवानी की, उनका सत्कार किया। कुशल-क्षेमप्रश्न के उपरान्त जब श्रीकृष्ण सुखपूर्वक बैठ गये, तब धौम्य, व्यास आदि ऋत्विजों और भीम, अर्जुन आदि भाइयों के बीच विराजमान महाराज युधिष्ठिर ने उनसे कहा—हे श्रीकृष्ण जी ! आपकी कृपा से अब सब पृथ्वी मेरे वश में है; मेरे खज़ाने में बहुत सा धन भी इकट्ठा हो गया है । हे देवकीनन्दन ! अब मैं

तद्दीक्षापय गोविन्द ! त्वमात्मानं महाभुज ! ।
त्वयीष्टवति दाशार्ह ! विपाप्मा भविता ह्यहम् ॥ २१ ॥
मां वाऽप्यभ्यनुजानीहि सहैभिरनुजैर्विभो ! ।
अनुज्ञातस्त्वया कृष्ण! प्राप्नुयां क्रतुमुत्तमम् ॥ २२ ॥
वैशम्पायन उवाच– तं कृष्णः प्रत्युवाचेदं बहूक्त्वा गुणविस्तरम् ।
त्वमेव राजशार्दूल ! सम्राडर्हो महाक्रतुम् ॥ २३ ॥
संप्राप्नुहि त्वया प्राप्ते कृतकृत्यास्ततो वयम् ।
यजस्वाऽभीप्सितं यज्ञं मयि श्रेयस्यवस्थिते ।
नियुंक्ष्व त्वं च मां कृत्ये सर्वं कर्ताऽस्मि ते वचः ॥ २४ ॥
युधिष्ठिर उवाच—सफलः कृष्ण ! संकल्पः सिद्धिश्च नियता मम ।
यस्य मे त्वं हृषीकेश ! यथेप्सितमुपस्थितः ॥ २५ ॥
वैशम्पायन उवाच–अनुज्ञातस्तु कृष्णेन पाण्डवो भ्रातृभिः सह ।
ईजितुं राजसूयेन साधनान्युपचक्रमे ॥ २६ ॥
ततस्त्वाज्ञापयामास पाण्डवोऽरिनिबर्हणः ।
सहदेवं युधां श्रेष्ठं मन्त्रिणश्चैव सर्वशः ॥ २७ ॥

यह सब धन राजसूय यज्ञ करके ब्राह्मणों को और अग्निदेव को सन्तुष्ट करने में लगाना चाहता हूँ। मैं तुम्हारी सहायता के भरोसे पर अपने भाइयों के साथ राजसूय यज्ञ करना चाहता हूँ। उसके लिये तुम मुझे आज्ञा दो। हे महाबाहो! मेरी इच्छा तो यह है कि तुम ही दीक्षा लेकर यह यज्ञ करो। आपके यज्ञ करने से मेरे सब पाप दूर हो जायँगे। अथवा मुझे ही भाइयों के साथ इस यज्ञ की दीक्षा लेने की अनुमति दो। तुम्हारी आज्ञा होने से मुझे विश्वास है कि यह यज्ञ ठीक-ठीक हो सकेगा ॥१७।२२॥

यह सुनकर श्रीकृष्ण जी ने युधिष्ठिर की प्रशंसा की, और कहा–हे महाराज ! अब आप सब राजाओं में श्रेष्ठ सम्राट् हैं। आप में सब प्रकार से यह महायज्ञ करने की योग्यता है। आप इस महायज्ञ को करेंगे तो उससे हम भी कृतकृत्य हो जायँगे। मैं आपका कल्याण चाहनेवाला हूँ, इसी लिये मैं आप के पास मौजूद हूँ। आप अपनी इच्छा के अनुसार यज्ञ का आरम्भ कीजिए। जो कुछ कार्य करना हो उसे करने की आज्ञा मुझे दीजिए; आपकी आज्ञा का पालन करने को मैं तैयार हूँ। यह सुनकर युधिष्ठिर ने कहा–हे श्रीकृष्ण ! तुम मेरे स्मरण करते ही यहां आकर उपस्थित हो गये, इसी से मेरा संकल्प सफल हो गया और मुझे कार्य सिद्ध होने का पूर्ण विश्वास हो गया ॥२३।२५॥

वैशम्पायन ने कहा–हे राजा जनमेजय ! इसके उपरान्त श्रीकृष्ण जी से आज्ञा पाकर राजा युधिष्ठिर यज्ञ की सब वस्तुएँ एकत्र करने लगे। धर्मराज युधिष्ठिर ने छोटे भाई सहदेव को और मन्त्रियों को

अस्मिन्क्रतौ यथोक्तानि यज्ञाङ्गानि द्विजातिभिः ।
तथोपकरणं सर्वं मङ्गलानि च सर्वशः ॥ २८ ॥
अधियज्ञांश्च सम्भारान्धौम्योक्तान्क्षिप्रमेव हि ।
समानयन्तु पुरुषा यथायोगं यथाक्रमम् ॥ २९ ॥
इन्द्रसेनो विशोकश्च पूरुश्चाऽर्जुनसारथिः ।
अन्नाद्याहरणे युक्ताः सन्तु मत्प्रियकाम्यया ॥ ३० ॥
सर्वकामाश्च कार्यन्तां रसगन्धसमन्विताः ।
मनोरथप्रीतिकरा द्विजानां कुरुसत्तम ! ॥ ३१ ॥
तद्वाक्यसमकालं च कृतं सर्वं न्यवेदयत् ।
सहदेवो युधां श्रेष्ठो धर्मराजे युधिष्ठिरे ॥ ३२ ॥
ततो द्वैपायनो राजन्नृत्विजः समुपानयत् ।
वेदानिव महाभागान्साक्षान्मूर्तिमतो द्विजान् ॥ ३३ ॥
स्वयं ब्रह्मत्वमकरोत्तस्य सत्यवतीसुतः ।
धनञ्जयानामृषभः सुसामा सामगोऽभवत् ॥ ३४ ॥
याज्ञवल्क्यो बभूवाऽथ ब्रह्मिष्ठोऽध्वर्युसत्तमः ।
पैलो होता वसोः पुत्रो धौम्येन सहितोऽभवत् ॥ ३५ ॥
एतेषां शिष्यवर्गाश्च पुत्राश्च भरतर्षभ ! ।
बभूवुर्होत्रगाः सर्वे वेदवेदाङ्गपारगाः ॥ ३६ ॥

---

आज्ञा दी कि ब्राह्मणों की आज्ञा के अनुसार और यज्ञ के अङ्गस्वरूप अन्य कर्मों की सब सामग्री सेवकों से मँगवाकर, ऋषि धौम्य की आज्ञा से, यथास्थान और यथाक्रम रखवाओ। और इन्द्रसेन, विशोक और अर्जुन के पूरु नाम सारथियों को आज्ञा दी कि तुम अन्न, रस और गन्धमय चारों प्रकार के भोजन जो ब्राह्मणों को अच्छे लगते हैं, इकट्ठे करो ॥२६।३१॥

युधिष्ठिर की आज्ञा की देर थी; सहदेव ने उसी समय सब सामग्री एकत्र करा दी और धर्मराज से जाकर कहा कि आपकी आज्ञा का पालन हो गया। हे राजा जनमेजय! शरीरधारी वेदों के समान तेजस्वी ब्राह्मणों को ऋत्विक् बनाकर सत्यवती के पुत्र व्यास जी ने ब्रह्मा का वरण लिया। धनञ्जयगोत्री सुसामा ऋषि सामवेद गानेवाले उद्गाता हुए। ब्रह्मनिष्ठ याज्ञवल्क्य ऋषि अध्वर्यु हुए। वसु के पुत्र पैल ऋषि और धौम्य ऋषि ने होता का काम ग्रहण किया। इन सब के पुत्र और शिष्य होत्रगाता हुए। ये भी सब वेद-वेदाङ्गों के पूरे ज्ञाता थे ॥३२।३६॥

ते वाचयित्वा पुण्याहमूहयित्वा च तं विधिम् ।
शास्त्रोक्तं पूजयामासुस्तद्देवयजनं महत् ॥ ३७ ॥
तत्र चक्रुरनुज्ञाताः शरणान्युत शिल्पिनः ।
गन्धवन्ति विशालानि वेश्मानीव दिवौकसाम् ॥ ३८ ॥
तत आज्ञापयामास स राजा राजसत्तमः ।
सहदेवं तदा सद्यो मन्त्रिणं पुरुषर्षभः ॥ ३९ ॥
आमन्त्रणार्थं दूतांस्त्वं प्रेषयस्वाऽऽशुगान्द्रुतम् ।
उपश्रुत्य वचो राज्ञः स दूतान्प्राहिणोत्तदा ॥ ४० ॥
आमन्त्रयध्वं राष्ट्रेषु ब्राह्मणान्भूमिपानथ ।
विशश्च मान्याञ्शूद्रांश्च सर्वानानयतेति च ॥ ४१ ॥
वैशम्पायन उवाच—समाज्ञप्तास्ततो दूताःपाण्डवेयस्य शासनात् ।
आमन्त्रयाम्बभूवुश्च आनयंश्चाऽपरान्द्रुतम् ।
तथा परानपि नरानात्मनः शीघ्रगामिनः ॥ ४२ ॥
ततस्ते तु यथाकालं कुन्तीपुत्रं युधिष्ठिरम् ।
दीक्षयाञ्चक्रिरे विप्रा राजसूयाय भारत ! ॥ ४३ ॥
दीक्षितः स तु धर्मात्मा धर्मराजो युधिष्ठिरः ।

सब ऋषियों ने स्वस्ति-पुण्याहवाचन-शान्तिपाठ के उपरान्त शास्त्र की विधि के अनुसार देवताओं का और यज्ञभूमि का पूजन किया। शिल्पविद्या जानने-वालों ( कारीगरों ) ने महाराज युधिष्ठिर की आज्ञा से उस विशाल यज्ञमण्डप के आसपास बड़े बड़े देव-ताओं के स्थानों के सदृश सुगन्धित स्थान बनवाये थे। [ उन स्थानों में फल, मिठाई, जल आदि रक्खा हुआ था। ] इसके उपरान्त धर्मराज युधिष्ठिर ने सहदेव मन्त्री को बुलाकर आज्ञा दी कि दूत लोग शीघ्रता के साथ चारों ओर भेज दिये जायँ, वे शीघ्र चलनेवाले वाहनों पर चढ़कर लोगों को निमन्त्रण दे आवें। सहदेव ने महाराज की आज्ञा पाकर उसी के अनुसार दूतों को बुलाकर उनसे कहा–तुम लोग शीघ्र जाकर हमारे साम्राज्य के ब्राह्मणों, क्षत्रियों, वैश्यों और श्रेष्ठ शूद्रों को निमन्त्रण देकर अपने साथ ले आओ ॥३७।४१॥

राजा युधिष्ठिर की आज्ञा से वे सब दूत [ शीघ्र-गामी रथों पर चढ़कर ] अनेक देशों और देशान्तरों को गये। और वहा से निमन्त्रित लोगों को अपने साथ लेकर उचित समय पर लौट आये। [ फिर राजा युधिष्ठिर ने भीष्म, द्रोण, धृतराष्ट्र, विदुर, कृपाचार्य और दुर्योधन आदि भाइयों को निमन्त्रण देने के लिये नकुल को हस्तिनापुर भेजा। ] इसके पीछे समय के आने पर, देश देशान्तरों से आये हुए ब्राह्मणों ने राजा युधिष्ठिर

जगाम यज्ञायतनं वृतो विप्रैः सहस्रशः ॥ ४४ ॥
भ्रातृभिर्ज्ञातिभिश्चैव सुहृद्भिःसचिवैः सह ।
क्षत्रियैश्च मनुष्येन्द्रैर्नानादेशसमागतैः ॥ ४५ ॥
अमात्यैश्च नरश्रेष्ठो धर्मो विग्रहवानिव ।
आजग्मुर्ब्राह्मणास्तत्र विषयेभ्यस्ततस्ततः ॥ ४६ ॥
सर्वविद्यासु निष्णाता वेदवेदाङ्गपारगाः ।
तेषामावसथांश्चक्रुर्धर्मराजस्य शासनात् ॥ ४७ ॥
वह्वन्नाच्छादनैर्युक्तान्सगणानां पृथक्पृथक् ।
सर्वर्तुगुणसम्पन्नाञ्शिल्पिनोऽथ सहस्रशः ॥ ४८ ॥
तेषु ते न्यवसन्राजन्ब्राह्मणा भृशसत्कृताः ।
कथयन्तः कथा वह्वीः पश्यन्तो नटनर्तकान् ॥ ४९ ॥
भुञ्जतां चैव विप्राणां वदतां च महास्वनः ।
अनिशं श्रूयते तत्र मुदितानां महात्मनाम् ॥ ५० ॥
दीयतां दीयतामेषां भुज्यतां भुज्यतामिति ।
एवंप्रकाराः संजल्पाः श्रूयन्ते स्माऽत्र नित्यशः ॥ ५१ ॥
गवां शतसहस्राणि शयनानां च भारत ! ।

---

को यज्ञ करने के लिये दीक्षा दी। दीक्षा लेकर वह यज्ञ-शाला में पधारे। अपने भाइयों, इष्ट-मित्रों, मन्त्रियों, अनुचरों, हज़ारों ब्राह्मणों और देश-देशान्तरों से आये हुए क्षत्रियों और राजाओं के बीच शरीरधारी धर्म के समान राजा युधिष्ठिर की शोभा हुई ॥४२।४६॥

साम्राज्य के चारों ओर से विद्वान्, वेदपाठी अनेक ब्राह्मण यज्ञ-शाला में आने लगे। उनके रहने के लिये कारीगरों ने पृथक् पृथक् असंख्य निवास-स्थान बनाये थे। उन भवनों में तरह-तरह की खाने-पीने की सामग्रियाँ और सब सुखदायक पदार्थ भी पड़े थे। उन भवनों में गर्मी, जाड़ा, बरसात आदि हर एक ऋतु में आराम मिलता था। महाराज युधिष्ठिर से सत्कार, पूजा पाकर ये सब ब्राह्मण लोग उन्हीं भवनों में रहने लगे। कोई तरह-तरह की कथाएँ कहते थे, और कोई नट आदि नाचनेवालों के कृत्य अर्थात् तमाशा देखते हुए रहने लगे ॥४७।४९॥

भोजन कर रहे और शास्त्रार्थ में लगे हुए प्रसन्नचित्त ब्राह्मणों का बड़ा भारी शब्द दिन-रात सुन पड़ता था। "इनको दो, उनको दो, भोजन करो" इत्यादि शब्द वहां हर समय चारों ओर सुन पड़ते थे। राजा युधिष्ठिर ने हरएक निमन्त्रित को अलग-अलग सैकड़ों हज़ारों गायें, सुवर्ण की शय्याएँ, और दास-दासियाँ दीं। देवलोक के स्वामी इन्द्र के समान महाराज

रुक्मस्य योषितां चैव धर्मराजः पृथग्ददौ ॥ ५२ ॥
प्रावर्ततैवं यज्ञः स पाण्डवस्य महात्मनः ।
पृथिव्यामेकवीरस्य शक्रस्येव त्रिविष्टपे ॥ ५३ ॥
ततो युधिष्ठिरो राजा प्रेषयामास पाण्डवम् ।
नकुलं हास्तिनपुरं भीष्माय पुरुषर्षभः ॥ ५४ ॥
द्रोणाय धृतराष्ट्राय विदुराय कृपाय च ।
भ्रातृणां चैव सर्वेषां येऽनुरक्ता युधिष्ठिरे ॥ ५५ ॥

इति श्रीमन्महाभारते सभापर्वणि राजसूयपर्वणि राजादिनिमन्त्रणं नाम त्रयस्त्रिंशोऽध्याय ॥ ३३ ॥

युधिष्ठिर का यज्ञ इस प्रकार आनन्द और उत्साह के साथ होने लगा। इसके पश्चात् महाराज युधिष्ठिर ने नकुल को भीष्म, द्रोणाचार्य, धृतराष्ट्र विदुर, कृपाचार्य और सब भाइयों को हस्तिनापुर जाकर लाने की आज्ञा दी ॥५०।५५॥

—:o:—

सभापर्व का तेंतीसवां अध्याय समाप्त हुआ ॥ ३३ ॥

अथ चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

वैशम्पायन उवाच—स गत्वा हास्तिनपुरं नकुलः समितिंजयः ।
भीष्ममामन्त्रयाञ्चक्रे धृतराष्ट्रं च पाण्डवः ॥ १ ॥
सत्कृत्याऽऽमन्त्रितास्तेन आचार्यप्रमुखास्ततः ।
प्रययुः प्रीतमनसो यज्ञं ब्रह्मपुरःसराः ॥ २ ॥
संश्रुत्य धर्मराजस्य यज्ञं यज्ञविदस्तदा ।
अन्ये च शतशस्तुष्टैर्मनोभिर्भरतर्षभ ! ॥ ३ ॥
द्रष्टुकामाः सभां चैव धर्मराजं च पाण्डवम् ।
दिग्भ्यः सर्वे समापेतुः क्षत्रियास्तत्र भारत ! ॥ ४ ॥

चौंतीसवां अध्याय ॥ ३४ ॥

वैशम्पायन ने कहा—हे राजा जनमेजय ! राजा युधिष्ठिर की आज्ञा पाकर नकुल शीघ्र ही हस्तिनापुर को गया। वहां जाकर यथोचित सम्मान, सत्कार और विनय के साथ उसने भीष्म, धृतराष्ट्र, आदि [ कुरु-वंशियों ] को और कृपाचार्य, द्रोणाचार्य आदि आचार्यों को यज्ञ में चलने के लिये अनुरोध किया। तब सब कौरव, ब्राह्मणों को आगे करके, प्रसन्नता के साथ यज्ञ-शाला को चले। राजा युधिष्ठिर के यज्ञ का निमन्त्रण पाकर अनेक देशों और देशान्तरों से राजा लोग, भेंट में देने के लिये अनेक प्रकार के रत्न लेकर खाण्डवप्रस्थ में पहुँचने लगे। यज्ञ का मण्डप, ऐश्वर्य, सभा और धर्मराज युधिष्ठिर को देखने की उन्हें

समुपादाय रत्नानि विविधानि महान्ति च ।
धृतराष्ट्रश्च भीष्मश्च विदुरश्च महामतिः ॥ ५ ॥
दुर्योधनपुरोगाश्च भ्रातरः सर्व एव ते ।
गान्धारराजः सुबलः शकुनिश्च महाबलः ॥ ६ ॥
अचलो वृषकश्चैव कर्णश्च रथिनां वरः ।
तथा शल्यश्च बलवान्बाह्लिकश्च महाबलः ॥ ७ ॥
सोमदत्तोऽथ कौरव्यो भूरिर्भूरिश्रवाः शलः ।
अश्वत्थामा कृपो द्रोणः सैन्धवश्च जयद्रथः ॥ ८ ॥
यज्ञसेनः सपुत्रश्च शाल्वश्च वसुधाधिपः ।
प्राग्ज्योतिषश्च नृपतिर्भगदत्तो महारथः ॥ ९ ॥
स तु सर्वैः सह म्लेच्छैः सागरानूपवासिभिः ।
पार्वतीयाश्च राजानो राजा चैव बृहद्बलः ॥ १० ॥
पौण्ड्रको वासुदेवश्च वङ्गः कालिङ्गकस्तथा ।
आकर्षः कुन्तलश्चैव मालवाश्चाऽऽन्ध्रकास्तथा ॥ ११ ॥
द्राविडाः सिंहलाश्चैव राजा काश्मीरकस्तथा ।
कुन्तिभोजो महातेजाः पार्थिवो गौरवाहनः ॥ १२ ॥
बाह्लिकाश्चाऽपरे शूरा राजानः सर्व एव ते ।
विराटः सह पुत्राभ्यां मावेल्लश्च महाबलः ॥ १३ ॥
राजानो राजपुत्राश्च नानाजनपदेश्वराः ।

बड़ी इच्छा थी ॥१।४॥

राजा धृतराष्ट्र, भीष्म, विदुर, दुर्योधन आदि धृतराष्ट्र के सौ पुत्र, गान्धार-राज सुबल, महाबली शकुनि, अचल, वृषक, महारथी कर्ण, शल्य, बाह्लीक, सोमदत्त, भूरि, भूरिश्रवा, शल, अश्वत्थामा, कृपाचार्य, द्रोणाचार्य, राजा जयद्रथ, अपने पुत्रों-सहित राजा द्रुपद, शाल्व, समुद्र के किनारे के रहनेवाले म्लेच्छों और पहाड़ी जातियों को साथ लिये हुए प्राग्ज्योतिषनगर के राजा भगदत्त महाराज युधिष्ठिर के यज्ञ में निमन्त्रित होकर आये। राजा बृहद्बल, पौण्ड्रक वासुदेव, वङ्ग और कलिङ्ग देश के राजा आकर्ष और कुन्तल देशों के राजा, मालव, और अन्ध्र देशों के राजा, द्राविड़ और सिंहल देशों के राजा, काश्मीर का राजा, राजा कुन्तिभोज, राजा गौरवाहन, बाह्लीक देश के अनेक शूरवीर राजा, दोनों पुत्रों-सहित राजा विराट, राजा मावेल्ल, राजकुमार-सहित महापराक्रमी

शिशुपालो महावीर्यः सह पुत्रेण भारत ! ॥ १४ ॥
आगच्छत्पाण्डवेयस्य यज्ञं समरदुर्मदः ।
रामश्चैवाऽनिरुद्धश्च कङ्कश्च सहसारणः ॥ १५ ॥
गदप्रद्युम्नसाम्बाश्च चारुदेष्णश्च वीर्यवान् ।
उल्मुको निशठश्चैव वीरश्चाऽङ्गावहस्तथा ॥ १६ ॥
वृष्णयो निखिलाश्चाऽन्ये समाजग्मुर्महारथाः ।
एते चाऽन्ये च बहवो राजानो मध्यदेशजाः ॥ १७ ॥
आजग्मुः पाण्डुपुत्रस्य राजसूयं महाक्रतुम् ।
ददुस्तेषामावसथान्धर्मराजस्य शासनात् ॥ १८ ॥
बहुभक्ष्यान्वितान्राजन्दीर्घिकावृक्षशोभितान् ।
तथा धर्मात्मजः पूजां चक्रे तेषां महात्मनाम् ॥ १९ ॥
सत्कृताश्च यथोद्दिष्टाञ्जग्मुरावसथान्नृपाः ।
कैलासशिखरप्रख्यान्मनोज्ञान्द्रव्यभूषितान् ॥ २० ॥
सर्वतः संवृतानुच्चैः प्राकारैः सुकृतैः सितैः ।
सुवर्णजालसंवीतान्मणिकुट्टिमभूषितान् ॥ २१ ॥
सुखारोहणसोपानान्महासनपरिच्छदान् ।
स्रग्दामसमवच्छन्नानुत्तमागुरुगन्धिनः ॥ २२ ॥

राजा शिशुपाल और अन्य अनेक राजा तथा राजपुत्र महाराज युधिष्ठिर के यज्ञ में निमन्त्रित होकर आये ॥५।१४॥

बलभद्र, अनिरुद्ध, सारण, कङ्क, गद, प्रद्युम्न, साम्ब, पराक्रमी चारुदेष्ण, उल्मुक, निशठ, अङ्गावह और अन्य अनेक वृष्णिवंशी महारथी यादव भी यज्ञस्थान में आये। इनके अतिरिक्त अनेक मध्यदेश के राजा-महाराजा महाराज युधिष्ठिर के राजसूय यज्ञ में आये। महाराज युधिष्ठिर की आज्ञा से इन अभ्यागत निमन्त्रित राजाओं के सत्कार और रहने के लिये निवास भवनों का पहले से ही प्रबन्ध कर रक्खा था। उन भवनों में बड़े-बड़े स्वादिष्ठ खाने-पीने के पदार्थ भरे पड़े थे। उनमें कुएँ खुदे हुए और नाना प्रकार के वृक्ष लगे हुए थे। महाराज युधिष्ठिर ने स्वयं उन आये हुए राजाओं का यथोचित सत्कार किया। इसके पश्चात् सब लोग अपने अपने लिये निर्दिष्ट डेरों में जाकर ठहरे ॥१५।१०॥

उन राजाओं के ठहरने के लिये जो भवन बने थे, वे एक से एक मिले हुए थे। ये भवन कैलाश के शिखर के समान, इतने ऊँचे थे कि चार कोस से अच्छी प्रकार दिखाई देते थे। उन भवनों में अनेक प्रकार के खाने-पीने के सामान भरे पड़े थे। ये भवन

हंसेन्दुवर्णसदृशानायोजनसुदर्शनान् ।
असंबाधान्समद्वारान्युतानुच्चावचैर्गुणैः ॥ २३ ॥
बहुधातुनिबद्धाङ्गान्हिमवच्छिखराणि च ।
विश्रान्तास्ते ततोऽपश्यन्भूमिपा भूरिदक्षिणम् ॥ २४ ॥
वृतं सदस्यैर्बहुभिर्धर्मराजं युधिष्ठिरम् ।
तत्सदः पार्थिवैः कीर्णं ब्राह्मणैश्च महर्षिभिः ।
भ्राजते स्म तदा राजन्नाकपृष्ठं यथामरैः ॥ २५ ॥

इति श्रीमन्महाभारते सभापर्वणि राजसूयपर्वणि निमन्त्रितराजागमने चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

श्वेत रङ्ग की ऊँची दीवारों से घिरे हुए और सुवर्ण के जालों से अलङ्कृत थे; उनमें मनोहर मणिमय स्थान थे और सुख के साथ चढ़ने योग्य सीढ़ियाँ थीं। वे खिले हुए फूलों की मालाओं से विभूषित थे। अनेक प्रकार के चन्दन, अगुरु आदि पदार्थों से सुगन्धित वे भवन कैलास पर्वत के शिखरों को भी मात कर रहे थे। उन भवनों के भीतर बढ़िया आसन पड़े थे। उनका रङ्ग हंस और चन्द्रमा के समान श्वेत था। वे भवन तङ्ग न थे। उन सब के द्वार एक से थे। और भी अनेक प्रकार की छोटी-बड़ी कारीगरियां उनके बनाने में दिखाई गई थीं। उनके बनाने में जगह-जगह अनेक धातुओं का उपयोग किये जाने से वे हिमवान् पर्वत के चित्र-विचित्र शिखरों की तरह जँचते थे। उन भवनों में विश्राम कर रहे राजा लोग वहीं से पीताम्बर पहने हुए, दीक्षा में स्थित, सदस्य ब्राह्मणों की मण्डली से घिरे राजा युधिष्ठिर के दर्शन पाते थे। अपार दान दक्षिणा के कारण सुप्रसिद्ध उस राजसूय यज्ञ में आए हुए ब्राह्मणों और क्षत्रियों से वह सभा-मण्डप इस प्रकार शोभित हो रहा था जिस प्रकार देवताओं से स्वर्ग की शोभा होती है ॥२०।२५॥

सभापर्व का चौंतीसवां अध्याय समाप्त हुआ ॥ ३४ ॥

अथ पंचत्रिंशोऽध्यायः ॥ ३५ ॥

वैशम्पायन उवाच-पितामहं गुरुं चैव प्रत्युद्गम्य युधिष्ठिरः ।
अभिवाद्य ततो राजन्निदं वचनमब्रवीत् ॥ १ ॥
भीष्मं द्रोणं कृपं द्रौणिं दुर्योधनविविंशती ।
अस्मिन्यज्ञे भवन्तो मामनुगृह्णन्तु सर्वशः ॥ २ ॥

पैंतीसवां अध्याय ॥ ३५ ॥

वैशम्पायन ने कहा-हे राजा जनमेजय! धर्मराज युधिष्ठिर ने आगे से जाकर भीष्म पितामह और द्रोणाचार्य को लिया और उन्हें प्रणाम किया। भीष्म, द्रोणाचार्य, कृपाचार्य, अश्वत्थामा, दुर्योधन, विविंशति आदि का स्वागत-सत्कार करके महाराज युधिष्ठिर ने कहा—आप लोगों के शुभागमन से मैं कृतार्थ हो गया।

इदं वसु महच्चैव यदिहाऽस्ति धनं मम ।
प्रणयन्तु भवन्तो मां यथेष्टमभिमन्त्रिताः ॥ ३ ॥
एवमुक्त्वा स तान्सर्वान्दीक्षितः पाण्डवाग्रजः ।
युयोज स यथायोगमधिकारेष्वनन्तरम् ॥ ४ ॥
भक्ष्यभोज्याधिकारेषु दुःशासनमयोजयत् ।
परिग्रहे ब्राह्मणानामश्वत्थामानमुक्तवान् ॥ ५ ॥
राज्ञां तु प्रतिपूजार्थं सञ्जयं संन्ययोजयत् ।
कृताकृतपरिज्ञाने भीष्मद्रोणौ महामती ॥ ६ ॥
हिरण्यस्य सुवर्णस्य रत्नानां चाऽन्ववेक्षणे ।
दक्षिणानां च वै दाने कृपं राजा न्ययोजयत् ॥ ७ ॥
तथाऽन्यान्पुरुषव्याघ्रांस्तस्मिंस्तस्मिन्न्ययोजयत् ।
बाह्लिको धृतराष्ट्रश्च सोमदत्तो जयद्रथः ॥ ८ ॥
नकुलेन समानीतः स्वामिवत्तत्र रेमिरे ।
क्षत्ता व्ययकरस्त्वासीद्विदुरः सर्वधर्मवित् ॥ ९ ॥
दुर्योधनस्त्वर्हणानि प्रतिजग्राह सर्वशः ।
चरणक्षालने कृष्णो ब्राह्मणानां स्वयं ह्यभूत् ॥ १० ॥
सर्वलोकसमावृत्तः पिप्रीषुः फलमुत्तमम् ।

इस यज्ञ में आप लोग सब तरह मुझ पर कृपा करें। यह सब मेरा धन आप ही लोगों का है। आप लोग कृपा करके मेरे कार्य में सहायता दें, यही मेरी प्रार्थना है। यज्ञ की दीक्षा लिये हुए महाराज युधिष्ठिर ने अब उन लोगों में से प्रत्येक को उसके योग्य कार्य सौंप दिया ॥१।४॥

भक्ष्य-भोज्य आदि खाने-पीने की सामग्री बाटने का काम दुःशासन को दिया गया। ब्राह्मणों की सेवा और सरकार का काम अश्वत्थामा को सौंपा गया। राजाओं के सरकार का काम सञ्जय को मिला। सब कामों का प्रबन्ध ठीक समय पर ठीक-ठीक होता है या नहीं, यह देखने-भालने का काम बुद्धिमान् भीष्म और द्रोणाचार्य को मिला। सुवर्ण, रत्न आदि के रखने और दक्षिणा देने का काम कृपाचार्य को सौंपा गया। इन कामों में इन लोगों की सहायता करने के लिये भी बहुत मनुष्य नियुक्त हुए। बाह्लीक, धृतराष्ट्र, सोमदत्त और जयद्रथ आदि बड़े बूढ़े लोगों की सेवा और सरकार का प्रबन्ध नकुल ने ऐसा किया कि वे लोग स्वामी की तरह रहकर सब प्रकार के सुख भोगने लगे ॥५।१०॥

सब धर्मों के जानकार, नीति के अद्वितीय पण्डित विदुर के हाथ से सब तरह का खर्च होता था। करद

द्रष्टुकामः सभां चैव धर्मराजं युधिष्ठिरम् ॥ ११ ॥
न कश्चिदाहरत्तत्र सहस्रावरमर्हणम् ।
रत्नैश्च बहुभिस्तत्र धर्मराजमवर्धयत् ॥ १२ ॥
कथं तु मम कौरव्यो रत्नदानैः समाप्नुयात् ।
यज्ञमित्येव राजानः स्पर्धमाना ददुर्धनम् ॥ १३ ॥
भवनैः सविमानाग्रैः सोदर्कैर्बलसंवृतैः ।
लोकराजविमानैश्च ब्राह्मणावसथैः सह ॥ १४ ॥
कृतैरावसथैर्दिव्यैर्विमानप्रतिमैस्तथा ।
विचित्रै रत्नवद्भिश्च ऋद्ध्या परमया युतैः ॥ १५ ॥
राजभिश्च समावृत्तैरतीव श्रीसमृद्धिभिः ।
अशोभत सदो राजन्कौन्तेयस्य महात्मनः ॥ १६ ॥
ऋद्ध्या च वरुणं देवं स्पर्धमानो युधिष्ठिरः ।
षडग्निनाऽथ यज्ञेन सोऽयजद्दक्षिणावता ॥ १७ ॥
सर्वाञ्जनान्सर्वकामैः समृद्धैः समतर्पयत् ।
अन्नवान्बहुभक्ष्यश्च भुक्तवज्जनसंवृतः ॥ १८ ॥
रत्नोपहारसम्पन्नो बभूव स समागमः ।

राजा लोग जो-जो भेंटें लेकर आते थे, उन्हें लेकर, ठिकाने से रखने का काम राजा दुर्योधन को मिला। भगवान् वासुदेव, सब से श्रेष्ठ फल प्राप्त करने की इच्छा से, आये हुए ब्राह्मणों के पाँव धोने का काम करने लगे। धर्मराज युधिष्ठिर और उनकी सभा देखने को जो लोग आये उन में ऐसा कोई न था, जो एक हज़ार स्वर्णमुद्रा (मोहरों) से कम भेंट लाया हो। प्रत्येक राजा मानों इस तरह का विचार करके कि मेरे ही दिये रत्न-धन से महाराज युधिष्ठिर के यज्ञ का खर्च पूरा हो जाय, असङ्ख्य धन और रत्न ला-लाकर उन्हें अर्पण करने लगा। [धर्मराज युधिष्ठिर का खज़ाना एक ओर दान-दक्षिणा मे खाली होता जाता था, और दूसरी ओर भेंट में आये हुए धन और रत्नों से भरता जाता था] सब सामान से भरे भवनों से, आकाश में यज्ञ देखने के लिये उपस्थित देवताओं और इन्द्र आदि लोकपालों के विमानों से, यज्ञशाला के आसपास बने हुए ब्राह्मणों के निवास-भवनों और राजाओं के विमान-तुल्य रत्नखचित डेरों से महाराज युधिष्ठिर की सभा की बड़ी अपूर्व शोभा हुई ॥१०।१६॥

[असङ्ख्य रत्नों की प्रभा से प्रकाशमान] ऐश्वर्य-सम्पन्न सभा-मण्डप के बीच बैठे हुए महाराज युधिष्ठिर अपने वैभव से राजराज कुबेर और महाराज वरुण के समान जान पड़ते थे। छः अग्नियों की स्थापना

इडाज्यसोमाहुतिभिर्मन्त्रशिक्षाविशारदैः ॥ १९ ॥
तस्मिन्हि ततृपुर्देवास्तते यज्ञे महर्षिभिः ।
यथा देवास्तथा विप्रा दक्षिणान्नमहाधनैः ।
ततृपुः सर्ववर्णाश्च तस्मिन्यज्ञे मुदान्विताः ॥ २० ॥

इति श्रीमन्महाभारते सभापर्वणि राजसूयपर्वणि यज्ञकरणे पञ्चत्रिंशोऽध्याय ॥ ३५ ॥
समाप्तं च राजसूयपर्व ।

हो जाने पर राजसूय यज्ञ किया गया। युधिष्ठिर ने यज्ञ की पूर्णाहुति होने के समय ब्राह्मणों को खूब दक्षिणा दी। जो कोई जिस इच्छा से गया, उसकी वह इच्छा युधिष्ठिर ने पूरी कर दी। अन्न के ढेर के ढेर लगे हुए थे। लाखों लोग तरह-तरह के स्वादिष्ट भोजन कर रहे थे। रत्न लुटाये जा रहे थे। उस यज्ञ में वैदिक, कर्मकाण्ड म निपुण, मन्त्रशिक्षा के पूरे पण्डित महर्षियों ने मन्त्र पढ़कर—आज्य और सोम की आहुतिया छोड़कर देवताओं को अच्छी तरह तृप्त कर दिया। सब देवता, ब्राह्मण और अन्य वर्णों के असङ्ख्य लोग आहुति, दक्षिणा, अन्न धन-रत्न आदि के द्वारा परम प्रसन्न और तृप्त हुए ॥१७।२०॥

सभापर्व का पैंतीसवा अध्याय समाप्त हुआ ॥ ३५ ॥

अथार्घाहरणपर्व ।

अथ षट्त्रिंशोऽध्याय ॥ ३६ ॥

वैशम्पायन उवाच—ततोऽभिषेचनीयेऽह्नि ब्राह्मणा राजभिः सह ।
अन्तर्वेदीं प्रविविशुः सत्कारार्हा महर्षयः ॥ १ ॥
नारदप्रमुखास्तस्य मन्तर्वेद्यां महात्मनः ।
समासीनाः शुशुभिरे सह राजर्षिभिस्तदा ॥ २ ॥
समेता ब्रह्मभवने देवा देवर्षयस्तथा ।
कर्मान्तरमुपासन्तो जजल्पुरमितोजसः ॥ ३ ॥
इदमेवं न चाऽप्येवमेवमेवं न चाऽन्यथा ।
प्रत्युचुर्बहवस्तत्र वितण्डावादिनो द्विजाः ॥ ४ ॥

छत्तीसवा अध्याय ॥ ३६ ॥

वैशम्पायन ने कहा—हे राजा जनमेजय! अभिषेच अर्थात् यज्ञस्नान के दिन सत्कार के योग्य ब्राह्मण और राजा लोग जो महाऋषि थे, अन्तर्वेदी नाम के सभा-मण्डप में गये। उस समय नारद आदि ऋषि लोग इन राजऋषियों के समीप अन्तर्वेदी में बैठे हुए ऐसे मालूम होते थे, मानों ब्रह्मा जी के भवन में देवता और देवऋषि बैठे हुए हैं। जब यज्ञस्नान हो चुका, तब ब्राह्मण लोग आपस में शास्त्र पर विचार करने लगे। "यह बात ऐसे ही है", "यह बात कभी ऐसी नहीं है", "यह बात ऐसे ही है, अन्यथा कभी नहीं

भैंसे, हाथी, सोना, रत्न, दास, दासी, साम्राज्य आदि सब कुछ छोड़ कर, हम केवल बनवास की शर्त पर यह दाँव लगाते हैं। हम या आप जो हारे वह बारह, वर्ष बनवास करके तेरहवें वर्ष गुप्त रहे। आइए,यह दाँव लगाकर हम लोग फिर खेलें। युधिष्ठिर ने शकुनि की शर्त स्वीकार कर ली, तब शकुनि ने पाँसे फेंके और कहा-मैं जीत गया ॥२१।२४॥

सभापर्व का छिहत्तरवां अध्याय समाप्त हुआ॥ ७६ ॥

अथ सप्तसप्ततितमोऽध्याय ॥ ७७ ॥

वैशम्पायन उवाच—ततः पराजिताः पार्था वनवासाय दीक्षिताः ।
अजिनान्युत्तरीयाणि जगृहुश्च यथाक्रमम् ॥ १ ॥
अजिनैः संवृतान्दृष्ट्वा हृतराज्यानरिन्दमान् ।
प्रस्थितान्वनवासाय ततो दुःशासनोऽब्रवीत् ॥ २ ॥
प्रवृत्तं धार्तराष्ट्रस्य चक्रं राज्ञो महात्मनः ।
पराजिताः पाण्डवेया विपत्तिं परमां गताः ॥ ३ ॥
अद्य देवाः संप्रयाताः समैर्वर्त्मभिरस्थलैः ।
गुणज्येष्ठास्तथा श्रेष्ठाः श्रेयांसो यद्वयं परैः ॥ ४ ॥
नरकं पातिताः पार्था दीर्घकालमनन्तकम् ।
सुखाच्च हीना राज्याच्च विनष्टाः शाश्वतीः समाः ॥ ५ ॥
धनेन मत्ता ये ते स्म धार्तराष्ट्रान्प्रहासिषुः ।
ते निर्जिता हृतधना वनमेष्यन्ति पाण्डवाः ॥ ६ ॥

सतहत्तरवा अध्याय ॥ ७७ ॥

वैशम्पायन ने कहा-हे राजा जनमेजय। पाण्डवों ने सर्वस्व हार कर वन को जाने के लिये मृगचर्म ले लिये। उस समय उनको राज्य-हीन और मृगचर्म लिये हुए वन को जाने के लिये तैयार देखकर दुःशासन कहने लगा—आहा, अब महाराज दुर्योधन ही इस पृथ्वी के चक्रवर्ती राजा हुए। पाण्डव लोग जुए में सब कुछ हार कर भारी विपत्ति में पड़ गये हैं। देवताओं ने सब ओर से हम पर कृपा की, जो आज हम अपने शत्रुओं से गुणों में अधिक और श्रेष्ठ हो गये ॥१।४॥

अब पाण्डव बहुत दिनों तक नरक भोगेंगे और सुख और राज्य से हीन होकर नष्ट होकर फिरेंगे। ये ही पाण्डव थे, जिन्होंने धन के मद से धृतराष्ट्र के पुत्रों की हसी की थी। देखो, अब ये धन और सर्वस्व हार कर वन को जाते हैं। अब इनके शरीर से विचित्र कवच, सुन्दर कपड़े और गहने उतार कर इन्हें मृगछाला पहना दो। ये लोग पहले समझते थे, कि पृथ्वी पर इनकी बराबरी करने

चित्रान्सन्नाहानवमुञ्चन्तु चैषां वासांसि दिव्यानि च भानुमन्ति ।
विवास्यन्तां रुरुचर्माणि सर्वे यथा ग्लहं सौबलस्याभ्युपेताः ॥ ७ ॥
न सन्ति लोकेषु पुमांस ईदृशा इत्येव ये भावितबुद्धयः सदा ।
ज्ञास्यन्ति तेऽस्मानमिहाऽद्य पाण्डवा विपर्यये षण्ढतिला इवाऽफलाः॥ ८ ॥
इदं हि वासो यदि वेदृशानां मनस्विनां रौरवमाहवेषु ।
अदीक्षितानामजिनानि यद्वद्बलीयसां पश्यत पाण्डवानाम् ॥ ९ ॥
महाप्राज्ञः सौमकिर्यज्ञसेनः कन्यां पाञ्चालीं पाण्डवेभ्यः प्रदाय ।
अकार्षीद्वै सुकृतं नेह किंचित्क्लीबाः पार्थाः पतयो याज्ञसेन्याः ॥ १० ॥
सूक्ष्मप्रावारानजिनोत्तरीयान्दृष्ट्वाऽरण्ये निर्धनानप्रतिष्ठान् ।
का त्वं प्रीतिं लप्स्यसे याज्ञसेनि ! पतिं वृणीष्वेह यमन्यमिच्छसि ॥ ११ ॥
एते हि सर्वे कुरवः समेताः क्षान्ता दान्ताः सुद्रविणोपपन्नाः ।
एषां वृणीष्वैकतमं पतित्वे न त्वां नयेत्कालविपर्ययोऽयम् ॥ १२ ॥
यथाऽफलाः षण्ढतिला यथा चर्ममया मृगाः ।
तथैव पाण्डवाः सर्वे यथा काकयवा* अपि ॥ १३ ॥
किं पाण्डवांस्ते पतितानुपास्य मोघः श्रमः षण्ढतिलानुपास्य ।
एवं नृशंसः परुषाणि पार्थानश्रावयद्धृतराष्ट्रस्य पुत्रः ॥ १४ ॥
तद्वै श्रुत्वा भीमसेनोऽत्यमर्षी निर्भर्त्स्योच्चैः संनिगृह्यैव रोषात् ।

वाला कोई नहीं। इस समय इनका अभिमान टूट गया है। अब ये सार-हीन तिलों के समान पराक्रम-हीन हो गये हैं। इनके ये मृगछाला के वस्त्र यज्ञ में दीक्षित होकर पहनने के नहीं हैं। किन्तु ये मृगचर्म अदीक्षित मनुष्यों के से हैं ॥५।९॥

राजा द्रुपद तो बड़ा बुद्धिमान् था। उसने यह काम अच्छा नहीं किया, जो द्रौपदी सी सुन्दर कन्या को इन नपुंसक पाण्डवों को व्याह दिया। हे द्रौपदी! इन पाण्डवों के साथ वन में जाकर तुझको क्या सुख मिलेगा? ये बिचारे धन और स्थान से हीन होकर मृगछाला ओढ़े हुए आप ही दीन हो रहे हैं। इससे तू हम सब कौरवों में से, जो क्षमावान्, जितेन्द्रिय और धनवान् हैं, जिसको चाहे अपना पति कर ले, जिसमें तुझको वन का दुःख न उठाना पड़े। अब ये पाण्डव ऐसे हैं, जैसे सार-हीन तिलों को बटोरने से कुछ लाभ नहीं होता है, इसी प्रकार से इन पतित पाण्डवों की सेवा करने से तुझको कोई सुख नहीं मिलेगा। भीमसेन उस दयाहीन दुःशासन के उक्त परुष वचनों को सुनकर क्रोध से भर गया और उसके पास जाकर उसे इस प्रकार से पकड़

* काकयवा —व्रीहि क्षेत्र ब्रीहिरूपि: सद उत्पन्न नि:सार तृणधान्यम् ।

उवाच चैनं सहसैवोपगम्य सिंहो यथा हैमवतः शृगालम् ॥ १५ ॥

भीमसेन उवाच—क्रूरं पापजनैर्जुष्टमकृतार्थं प्रभाषसे ।
गान्धारविद्यया हि त्वं राजमध्ये विकत्थसे ॥ १६ ॥
यथा तुदसि मर्माणि वाक्छरैरिह नो भृशम् ।
तथा स्मारयिता तेऽहं कृन्तन्मर्माणि संयुगे ॥ १७ ॥
ये च त्वामनुवर्तन्ते क्रोधलोभवशानुगाः ।
गोप्तारः सानुबन्धांस्तान्नेताऽस्मि यमसादनम् ॥ १८ ॥

वैशम्पायन उवाच-एवं ब्रुवाणमजिनैर्विवासितं दुःशासनस्तं परिनृत्यति स्म ।
मध्ये कुरूणां धर्मनिबद्धमार्गं गौर्गौरिति स्माह्वयन्मुक्तलज्जः ॥ १९ ॥

भीमसेन उवाच—नृशंस ! परुषं वक्तुं शक्यं दुःशासन ! त्वया ।
निकृत्या हि धनं लब्ध्वा को विकत्थितुमर्हति ? ॥ २० ॥
मैव स्म सुकृताँल्लोकान्गच्छेत्पार्थो वृकोदरः ।
यदि वक्षो हि ते भित्त्वा न पिबेच्छोणितं रणे ॥ २१ ॥
धार्तराष्ट्रान्रणे हत्वा मिषतां सर्वधन्विनाम् ।

कर, जैसे सिंह किसी मृग को पकड लेवे, कहने लगा ॥१०।१५॥

हे दुष्ट ! शकुनि के कपट से तू फूला नहीं समाता और इस राजसभा के बीच में पापियों के योग्य अनुचित बातें कह रहा है । इसका फल तुझे युद्ध के मैदान में अच्छी तरह दिया जायगा । जैसे यहा पर तू वचन-रूपी बाणों के प्रहार से हमारे मर्म-स्थानों को छेद रहा है, वैसे ही मैं भी युद्धभूमि में तुझे मारते समय इन बातों की याद दिलाकर पीड़ा पहुँचाऊँगा । देख, तू जिनके बल पर कूद रहा है और जो लोग क्रोध और लोभ के वश होकर तेरे पिछलग्गू हो रहे हैं, उन्हें भी मैं जीता न छोड़ूँगा । ॥१६।१८॥

वैशम्पायन ने कहा–हे राजा जनमेजय ! धर्म के अनुरोध से भीमसेन कुछ प्रतिकार न करके उस समय वचनों से ही उसे डाटने और उसका तिरस्कार करने लगे । निर्लज्ज दुःशासन जानता था, कि धर्मपाश में बँधे रहने के कारण भीमसेन प्रहार न करेंगे; इसी से वह अत्यन्त उच्छृङ्खल होकर सब के सामने नाचने और मटकने लगा; और भीमसेन को "बैल, बैल" कहने लगा । इससे भीमसेन का क्रोध और भी प्रचण्ड हो गया । उन्होंने कहा–हे निर्लज्ज ! तू ही कपट के जुए में धन पाकर ऐसे कठोर शब्द कह सकता है और ऐसा अहङ्कार कर सकता है । और किसी मनुष्य से ऐसी निर्लज्जता नहीं हो सकती । मैं प्रतिज्ञा करता हूँ, कि यदि युद्ध में तेरी छाती फाड़ कर मै लोहू न पी लूँ, तो मुझे वे लोक न प्राप्त हों, जिनमें पुण्यात्मा लोग जाते हैं । मैं सब के सामने

शमं गन्तास्मि न चिरात्सत्यमेतद्ब्रवीमि ते ॥ २२ ॥

वैशम्पायन उवाच– तस्य राजा सिंहगतेः सखेलं दुर्योधनो भीमसेनस्य हर्षात् ।
गतिं स्वगत्याऽनुचकार मन्दो निर्गच्छतां पाण्डवानां सभायाः ॥ २३ ॥
नैतावता कृतमित्यब्रवीत्तं वृकोदरः संनिवृत्तार्धकायः ।
शीघ्रं हि त्वां निहतं सानुबन्धं संस्मार्याऽहं प्रतिवक्ष्यामि मूढ ! ॥ २४ ॥
एवं समीक्ष्याऽऽत्मनि चाऽवमानं नियम्य मन्युं बलवान्स मानी ।
राजानुगः संसदि कौरवाणां विनिष्क्रामन्वाक्यमुवाच भीमः ॥ २५ ॥

भीमसेन उवाच– अहं दुर्योधनं हन्ता कर्णं हन्ता धनञ्जयः ।
शकुनिं चाऽक्षकितवं सहदेवो हनिष्यति ॥ २६ ॥
इदं च भूयो वक्ष्यामि सभामध्ये बृहद्वचः ।
सत्यं देवाः करिष्यन्ति यन्नो युद्धं भविष्यति ॥ २७ ॥
सुयोधनमिमं पापं हन्ताऽस्मि गदया युधि ।
शिरः पादेन चाऽस्याऽहमधिष्ठास्यामि भूतले ॥ २८ ॥
वाक्यशूरस्य चैवास्य परुषस्य दुरात्मनः ।
दुःशासनस्य रुधिरं पाताऽस्मि मृगराडिव ॥ २९ ॥

अर्जुन उवाच– नैवं वाचा व्यवसितं भीम ! विज्ञायते सताम् ।

---

कहता हूँ, कि युद्ध में शीघ्र ही धृतराष्ट्र के पुत्रों का नाश करके अपने इस क्रोध को शान्त करूँगा। ॥१९।२२॥

वैशम्पायन कहते हैं-हे राजन् ! इसके पश्चात बनवास के लिये जाने को जब पाण्डव लोग सभा से निकलने लगे तब राजा दुर्योधन, सिंह के समान गतिवाले भीमसेन की चाल के समान चाल से, चलने लगा। भीमसेन ने तिरछा होके कहा-हे मूढ़ ! इस से क्या होना है, शीघ्र ही तुझे साथियों के सहित मारकर स्मरण कराऊँगा। हे राजा जनमेजय! भीमसेन ने अपना अपमान देखकर भी उस समय क्रोध को रोक लिया, क्योंकि वे महाराज युधिष्ठिर के वश में थे। किन्तु सभा से निकलते-निकलते भीमसेन ने यह अपनी प्रतिज्ञा ऊँचे स्वर से सब को सुना दी ॥२३।२५॥

कि मैं स्वयं युद्ध-भूमि में नीच दुर्योधन को मारूँगा, अर्जुन कर्ण को मारेंगे, पांसों के छली शकुनि को सहदेव मारेंगे। फिर सभा के बीच में कह देता हूँ, कि गदायुद्ध में इस पापी दुर्योधन को मारकर मैं इसके सिर पर पांव रक्खूँगा और कठोर वचन कहनेवाले, वचनवीर इस दुष्ट दुःशासन के हृदय के रक्त को मैं, सिंह की तरह गरजता हुआ अवश्य पिऊंगा। देवता लोग शीघ्र ही मेरी यह प्रतिज्ञा पूरी करेंगे ॥२६।२९॥

इतश्चतुर्दशे वर्षे द्रष्टारो यद्भविष्यति ॥ ३० ॥

भीमसेन उवाच—दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुःशासनचतुर्थानां भूमिः पास्यति शोणितम् ॥ ३१ ॥

अर्जुन उवाच—असूयितारं द्रष्टारं प्रवक्तारं विकत्थनम् ।
भीमसेन ! नियोगात्ते हन्ताऽहं कर्णमाहवे ॥ ३२ ॥
अर्जुनः प्रतिजानीते भीमस्य प्रियकाम्यया ।
कर्णं कर्णानुगांश्चैव रणे हन्तास्मि पत्रिभिः ॥ ३३ ॥
ये चाऽन्ये प्रतियोत्स्यन्ति बुद्धिमोहेन मां नृपाः ।
तांश्च सर्वानहं बाणैर्नेतास्मि यमसादनम् ॥ ३४ ॥
चलेद्धि हिमवान्स्थानान्निष्प्रभः स्याद्दिवाकरः ।
शैत्यं सोमात्प्रणश्येत मत्सत्यं विचलेद्यदि ॥ ३५ ॥
न प्रदास्यति चेद्राज्यमितो वर्षे चतुर्दशे ।
दुर्योधनोऽभिसत्कृत्य सत्यमेतद्भविष्यति ॥ ३६ ॥

वैशम्पायन उवाच—इत्युक्तवति पार्थे तु श्रीमान्माद्रवतीसुतः ।
प्रगृह्य विपुलं बाहुं सहदेवः प्रतापवान् ॥ ३७ ॥
सौबलस्य वधं प्रेप्सुरिदं वचनमब्रवीत् ।

---

इसके पीछे अर्जुन ने कहा—हे भीमसेन ! सज्जनों का यह नियम है, कि वे जो कुछ करना चाहते हैं, उसे करने के पहले अपने मुख से नहीं कहते । आज से तेरह वर्ष पूरे होने पर, चौदहवें वर्ष जो कुछ होगा, उसे सब लोग आप ही देख लेंगे । भीमसेन ने फिर कहा—उस समय पृथ्वीदेवी दुर्योधन, कर्ण, दुःशासन और शकुनि इन चारों दुरात्माओं का रक्त पियेगी । तब अर्जुन ने भीमसेन को प्रसन्न करने की इच्छा से प्रतिज्ञा की, कि मैं तुम्हारी आज्ञा से इस नीच और कुबुद्धि कर्ण को और इसके साथी सब राजाओं को, जो मेरे सन्मुख आवेंगे मारकर यमलोक में पहुँचाऊँगा । जो आज से चौदहवें वर्ष में यह नीच दुर्योधन हमारे राज्य को हमें न देगा, तो निःसन्देह मैं इन सब बातों को सच करके दिखाऊँगा । चाहे हिमालय पर्वत अपने स्थान से हट जाय, चाहे सूर्य प्रभा-हीन हो जाय और चाहे चन्द्रमा की शीतलता जाती रहे, परन्तु मैं अपनी प्रतिज्ञा से नहीं हटूँगा ॥३०।३६॥

वैशम्पायन ने कहा—हे राजा जनमेजय ! इसके पीछे प्रतापवान् सहदेव क्रोध से लाल-लाल आँखें किये हुए और साँप की तरह श्वास लेता हुआ शकुनि को मारने की इच्छा से, अपनी भुजाओं को पकड़ कर कहने लगा—अरे गान्धार-राजकुल के यश को मिटानेवाले दुष्ट शकुनि ! मैं पासे, जिन के बल

क्रोधसंरक्तनयनो निःश्वसन्निव पन्नगः ॥ ३८ ॥

सहदेव उवाच—अक्षान्यान्मन्यसे मूढ ! गान्धाराणां यशोहर ! ।
नैतेऽक्षा निशिता बाणास्त्वयैते समरे वृताः ॥ ३९ ॥
यथा चैवोक्तवान्भीमस्त्वामुद्दिश्य सबान्धवम् ।
कर्ताऽहं कर्मणस्तस्य कुरु कार्याणि सर्वशः ॥ ४० ॥
हन्तास्मि तरसा युद्धे त्वामेवेह सबान्धवम् ।
यदि स्थास्यसि संग्रामे क्षत्रधर्मेण सौबल ! ॥ ४१ ॥
सहदेववचः श्रुत्वा नकुलोऽपि विशाम्पते ।
दर्शनीयतमो नृणामिदं वचनमब्रवीत् ॥ ४२ ॥

नकुल उवाच—सुतेयं यज्ञसेनस्य द्यूतेऽस्मिन्धृतराष्ट्रजैः ।
यैर्वाचः श्राविता रूक्षाः स्थितैर्दुर्योधनप्रिये ॥ ४३ ॥
तान्धार्तराष्ट्रान्दुर्वृत्तान्मुमूर्षून्कालचोदितान् ।
गमयिष्यामि भूयिष्ठानहं वैवस्वतक्षयम् ॥ ४४ ॥
निदेशाद्धर्मराजस्य द्रौपद्याः पदवीं चरन् ।
निर्धार्तराष्ट्रां पृथिवीं कर्तास्मि न चिरादिव ॥ ४५ ॥

वैशम्पायन उवाच-एवं ते पुरुषव्याघ्राः सर्वे व्यायतबाहवः ।
प्रतिज्ञा बहुलाः कृत्वा धृतराष्ट्रमुपागमन् ॥ ४६ ॥

इति श्रीमन्महाभारते सभापर्वणि अनुद्यूतपर्वणि पाण्डवप्रतिज्ञाकरणे सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

तू नाच रहा है, पांसे नहीं हैं, किन्तु ये तेरे प्राण को नाश करने वाले तीक्ष्ण बाण हैं । जो तू क्षत्रिय-धर्म को छोड़ कर युद्ध से भाग न जायगा, तो जैसी भीमसेन ने आज्ञा दी है उसी प्रकार से मैं तुझको तेरे भाई बन्धु और साथियों-सहित मारूँगा ॥३७।४१॥

इसके पीछे सहदेव की प्रतिज्ञा सुनकर नकुल ने कहा—इन धृतराष्ट्र के पुत्रों को जिन्होंने काल से प्रेरित होकर मरने की इच्छा से द्रौपदी को कठोर वचन सुनाये हैं, मैं युधिष्ठिर की आज्ञा से मारकर यमलोक में पहुँचाऊँगा और द्रौपदी को प्रसन्न करने के लिये पृथ्वी पर धृतराष्ट्र के पुत्रों का बीज नाश कर दूँगा। वैशम्पायन ने कहा—हे राजा जनमेजय! महाबाहु पुरुषसिंह, पाण्डव इस प्रकार शत्रुनाश की कठिन प्रतिज्ञा करके राजा धृतराष्ट्र के पास गये ॥४२।४६॥

—:x:—

सभापर्व का सतहत्तरवां अध्याय समाप्त हुआ ॥ ७७ ॥

अथ अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

युधिष्ठिर उवाच—आमन्त्रयामि भरतांस्तथा वृद्धं पितामहम् ।
राजानं सोमदत्तं च महाराजं च बाह्लिकम् ॥ १ ॥
द्रोणं कृपं नृपांश्चान्यानश्वत्थामानमेव च ।
विदुरं धृतराष्ट्रं च धार्तराष्ट्रांश्च सर्वशः ॥ २ ॥
युयुत्सुं संजयं चैव तथैवाऽन्यान्सभासदः ।
सर्वानामन्त्र्य गच्छामि द्रष्टास्मि पुनरेत्य वः ॥ ३ ॥
वैशम्पायन उवाच-न च किंचिदथोचुस्ते ह्रिया सन्ना युधिष्ठिरम् ।
मनोभिरेव कल्याणं दध्युस्ते तस्य धीमतः ॥ ४ ॥
विदुर उवाच—आर्या पृथा राजपुत्री ! नाऽरण्यं गन्तुमर्हति ।
सुकुमारी च वृद्धा च नित्यं चैव सुखोचिता ॥ ५ ॥
इह वत्स्यति कल्याणी सत्कृता मम वेश्मनि ।
इति पार्था विजानीध्वमगदं वोऽस्तु सर्वशः ॥ ६ ॥
पाण्डवा ऊचुः—तथेत्युक्त्वाऽब्रुवन्सर्वे यथा नो वदसेऽनघ !
त्वं पितृव्यः पितृसमो वयं च त्वत्परायणाः ॥ ७ ॥
यथाऽऽज्ञापयसे विद्वंस्त्वं हि नः परमो गुरुः ।

अठहत्तरवां अध्याय ॥ ७८ ॥

युधिष्ठिर ने धृतराष्ट्र की सभा में जाकर कहा—मैं भरतवंश के सब लोगों से विदा होता हूं । वृद्ध पितामह भीष्म, राजा सोमदत्त, राजा बाह्लीक, द्रोणाचार्य, कृपाचार्य, अश्वत्थामा, अन्य राजा लोग, विदुर, राजा धृतराष्ट्र और उनके सब पुत्र, युयुत्सु, सञ्जय तथा सब सभासदगण, मैं आप लोगों से विदा होकर वन को जाता हूं । वहां से लौट कर फिर आप लोगों के दर्शन करूँगा । वैशम्पायन ने कहा-हे राजा जनमेजय ! युधिष्ठिर की बात को सुनकर किसी ने कुछ उत्तर नहीं दिया, लज्जा से सब नीचे को मुख किये हुए बैठे रहे। परन्तु उन सबों ने मन में पाण्डवों को आशीर्वाद दिया ॥१।४॥

इसके पीछे विदुर जी ने कहा—हे युधिष्ठिर ! आर्या कुन्ती राजकुमारी हैं । वे वृद्ध हैं और सदा सुख में रही हैं। इस लिये उनका तुम्हारे साथ वन को जाना उचित नहीं । कल्याणी कुन्ती मेरे यहीं घर में, आदर-सत्कार के साथ रहेंगी । तुम लोग यह बात स्वीकार कर लो । जाओ, तुम लोगों का सदा, सब जगह, सब तरह भला हो । यह सुनकर पाण्डवों ने कहा—आप हमारे चचा और पिता के समान हैं । हम लोग सदा आप के अनुगत हैं । आप हमारे परम गुरु हैं । इस लिये आप ने जो

यच्चाऽन्यदपि कर्तव्यं तद्विधत्स्व महामते ! ॥ ८ ॥
विदुर उवाच—युधिष्ठिर ! विजानीहि ममेदं भरतर्षभ ! ।
नाऽधर्मेण जितः कश्चिद्व्यथते वै पराजये ॥ ९ ॥
त्वं वै धर्मं विजानीषे युद्धे जेता धनञ्जयः ।
हन्ताऽरीणां भीमसेनो नकुलस्त्वर्थसंग्रही ॥ १० ॥
संयन्ता सहदेवस्तु धौम्यो ब्रह्मविदुत्तमः ।
धर्मार्थकुशला चैव द्रौपदी धर्मचारिणी ॥ ११ ॥
अन्योन्यस्य प्रियाः सर्वे तथैव प्रियदर्शनाः ।
परैरभेद्याः संतुष्टाः को वो न स्पृहयेदिह ? ॥ १२ ॥
एष वै सर्वकल्याणः समाधिस्तव भारत ! ।
नैनं शत्रुर्विषहते शक्रेणाऽपि समोऽप्युत ॥ १३ ॥
हिमवत्यनुशिष्टोऽसि मेरुसावर्णिना पुरा ।
द्वैपायनेन कृष्णेन नगरे वारणावते ॥ १४ ॥
भृगुतुङ्गे च रामेण दृषद्वत्यां च शंभुना ।
अश्रौषीरसितस्याऽपि महर्षेरञ्जनं प्रति ॥ १५ ॥
कल्माषीतीरसंस्थस्य गतस्त्वं शिष्यतां भृगोः ।

कहा, यह हमें स्वीकार है । आप और भी जो कुछ हमारा कर्तव्य समझते हों, उसका उपदेश कीजिए ॥५।८॥

यह सुनकर विदुर जी ने युधिष्ठिर से कहा— हे भरतकुल के यश को बढ़ानेवाले ! देखो, अधर्म के द्वारा जीता गया पुरुष कदापि अपनी हार से व्यथित या खिन्न नहीं होता। तुम धर्म के मर्म को विशेष रूप से जानते हो । अर्जुन सदा युद्ध में विजय प्राप्त करते हैं। भीमसेन अपने बल से शत्रुओं का नाश करते हैं । नकुल धन के संग्रह में अद्वितीय हैं । सहदेव संयमी हैं । तुम्हारे पुरोहित धौम्य ब्रह्म-ज्ञानियों में श्रेष्ठ हैं । पतिव्रता द्रौपदी धर्म-अर्थ के कामों में निपुण हैं और धर्म में निष्ठा रखती है । तुम सब एक दूसरे को प्यारे हो । तुमको देखकर सब लोग प्रसन्न होते है । तुम लोग सन्तोषी हो, इस लिये शत्रु लोग तुम लोगों में फूट नहीं डाल सकते । तुम्हारे मन को स्वस्थ रखनेवाले ये नियम सब प्रकार कल्याणदायक हैं। इन्द्र के समान प्रबल शत्रु भी तुम्हारा कुछ नहीं बिगाड़ सकते ॥९।१३॥

पहले हिमाचल पर मेरुसावर्णि ऋषि ने, वारणावत नगर में व्यास जी ने, भृगुतुङ्ग पर्वत पर परशुराम जी ने, दृषद्वती नदी के तट पर शिव जी ने तुमको ज्ञान और धर्म की शिक्षा दी है । तुमने अञ्जन पर्वत पर महर्षि असित के मुख से उपदेश सुना है ।

द्रष्टा सदा नारदस्ते धौम्यस्तेऽयं पुरोहितः ॥ १६ ॥
मा हासीः साम्पराये त्वं बुद्धिं तामृषिपूजिताम् ।
पुरूरवसमैलं त्वं बुद्ध्या जयसि पाण्डव ! ॥ १७ ॥
शक्त्या जयसि राज्ञोऽन्यानृषीन्धर्मोपसेवया ।
ऐन्द्रे जये धृतमना याम्ये कोपविधारणे ॥ १८ ॥
तथा विसर्गे कौवेरे वारुणे चैव संयमे ।
आत्मप्रदानं सौम्यत्वमद्भ्यश्चैवोपजीवनम् ॥ १९ ॥
भूमेः क्षमां च तेजश्च समग्रं सूर्यमण्डलात् ।
वायोर्बलं प्राप्नुहि त्वं भूतेभ्यश्चाऽऽत्मसंपदम् ॥ २० ॥
अगदं वोऽस्तु भद्रं वो द्रष्टास्मि पुनरागतान् ।
आपद्धर्मार्थकृच्छ्रेषु सर्वकार्येषु वा पुनः ॥ २१ ॥
यथावत्प्रतिपद्येथाः काले काले युधिष्ठिर ! ।
आपृष्टोऽसीह कौन्तेय ! स्वस्ति प्राप्नुहि भारत ! ॥ २२ ॥
कृतार्थं स्वस्तिमन्तं त्वां द्रक्ष्यामः पुनरागतम् ।
न हि वो वृजिनं किंचिद्वेद कश्चित्पुरा कृतम् ॥ २३ ॥
वैशम्पायन उवाच–एवमुक्तस्तथेत्युक्त्वा पाण्डवः सत्यविक्रमः ।
भीष्मद्रोणौ नमस्कृत्य प्रातिष्ठत युधिष्ठिरः ॥ २४ ॥

इति श्रीमन्महाभारते सभापर्वणि अनुद्यूतपर्वणि युधिष्ठिरवनप्रस्थाने अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

कल्माषी नदी के तट पर भृगु महर्षि ने तुमको अपना शिष्य बनाया है। देवर्षि नारद सदा तुम्हारी देखरेख रखते हैं । इनके अतिरिक्त महर्षि धौम्य तुम्हारे पुरोहित हैं । हे पाण्डव ! ऋषियों के दिये हुए पूजनीय उपदेशों को, सङ्कट या संग्राम के समय मत भूलना । तुम बुद्धि में पुरूरवा से, धर्म के आचरण में ऋषियों से, सन्तोष में इन्द्र से, शक्ति में सब राजाओं से, क्रोध के रोकने में यमराज से, उदारता और दान में कुबेर से, तथा इन्द्रिय संयम में वरुण से भी बढ़कर हो ॥१४।१८॥

तुम चन्द्रमा से शान्ति, जल से परोपकार की वृत्ति, पृथ्वी से क्षमा, सूर्य से तेज, वायु से बल और सब प्राणियों से आत्म-सम्पत्ति प्राप्त करो। तुम्हारा भला हो। कुल-देवता तुम्हें नीरोग रक्खें। फिर लौट कर जब तुम आओगे तब हम तुमको देखेंगे; क्योंकि आज तक तुमने कुछ अधर्म नहीं किया है । वैशम्पायन ने कहा–हे राजा जनमेजय ! युधिष्ठिर उक्त बातों को सुनकर और 'ऐसा ही होगा' कह कर भीष्म, द्रोणाचार्य को प्रणाम करके चल दिये ॥१९।२४॥

अथ एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

वैशम्पायन उवाच– तस्मिन्संप्रस्थिते कृष्णा पृथां प्राप्य यशस्विनीम् ।
आपृच्छद् भृशदुःखार्ता याश्चाऽन्यास्तत्र योषितः ॥ १ ॥
यथार्हं वन्दनाश्लेषान्कृत्वा गन्तुमियेष सा ।
ततो निनादः सुमहान्पाण्डवान्तःपुरेऽभवत् ॥ २ ॥
कुन्ती च भृशसंतप्ता द्रौपदीं प्रेक्ष्य गच्छतीम् ।
शोकविह्वलया वाचा कृच्छ्राद्वचनमब्रवीत् ॥ ३ ॥
वत्से ! शोको न ते कार्यः प्राप्येदं व्यसनं महत् ।
स्त्रीधर्माणामभिज्ञाऽसि शीलाचारवती तथा ॥ ४ ॥
न त्वां संदेष्टुमर्हामि भर्तॄन्प्रति शुचिस्मिते ! ।
साध्वी गुणसमापन्ना भूषितं ते कुलद्वयम् ॥ ५ ॥
सभाग्याः कुरवश्चेमे ये न दग्धास्त्वयाऽनघे ! ।
अरिष्टं व्रज पन्थानं मदनुध्यानबृंहिता ॥ ६ ॥
भाविन्यर्थे हि सत्स्त्रीणां वैकृतं नोपजायते ।
गुरुधर्माभिगुप्ता च श्रेयः क्षिप्रमवाप्स्यसि ॥ ७ ॥
सहदेवश्च मे पुत्रः सदाऽवेक्ष्यो वने वसन् ।
यथेदं व्यसनं प्राप्य नाऽयं सीदेन्महामतिः ॥ ८ ॥

उन्नासीवां अध्याय ॥ ७९ ॥

वैशम्पायन ने कहा–हे राजा जनमेजय ! पाण्डवों को वन में जाने के लिये तैयार देखकर, उदास द्रौपदी यशस्विनी कुन्ती के पास गई। वहां कुन्ती को और अन्य कुल की स्त्रियों को प्रणाम करके, उनसे विदा होकर, द्रौपदी जब पतियों के साथ जाने लगी, तब पाण्डवों के महल में बड़ा भारी रोने का शब्द सुन पड़ने लगा। द्रौपदी को जाने के लिये तैयार देखकर, कुन्ती शोक से विह्वल और अचेत सी हो गई। बड़े कष्ट से अपने को सम्भाल कर उसने द्रौपदी से कहा-॥१।३॥

हे पुत्री ! दुःख में पड़ने के कारण से शोक से अत्यन्त अधीर न होना। तुम साध्वी, सुशीला और पतिव्रता हो। तुम धर्म को जानती हो और सदाचारिणी हो। तुमने अपने गुणों से पिता के और पति के कुल को उज्ज्वल किया है। पति के साथ स्त्री को कैसा व्यवहार करना चाहिए, यह तुम्हें बताने की आवश्यकता नहीं। देखो पुत्री ! कौरवों का कोई बड़ा भारी पुण्य और अनिर्वचनीय सौभाग्य था, जिस से अभी तक तुम्हारे क्रोध की आग में पड़कर भस्म नहीं हुए। हे द्रौपदी ! मैं सदा तुम्हारे

तथेत्युक्त्वा तु सा देवी स्रवन्नेत्रजलाविला ।
शोणिताक्तैकवसना मुक्तकेशी विनिर्ययौ ॥ ९ ॥
तां क्रोशन्तीं पृथा दुःखादनुवव्राज गच्छतीम् ।
अथाऽपश्यत्सुतान्सर्वान्हृताभरणवाससः ॥ १० ॥
रुरुचर्मावृततनून्ह्रिया किंचिदवाङ्मुखान् ।
परैः परीतान्संहृष्टैः सुहृद्भिश्चाऽनुशोचितान् ॥ ११ ॥
तदवस्थान्सुतान्सर्वानुपसृत्याऽतिवत्सला ।
स्वजमानाऽवदच्छोकात्तत्तद्विलपती बहु ॥ १२ ॥
कुन्त्युवाच—कथं सद्धर्मचारित्रान्वृत्तस्थितिविभूषितान् ।
अक्षुद्रान्दृढभक्तांश्च दैवतेज्यापरान्सदा ॥ १३ ॥
व्यसनं वः समभ्यागात्कोऽयं विधिविपर्ययः ।
कस्याऽपध्यानजं चेदमागः पश्यामि वो धिया ॥ १४ ॥
स्यात्तु मद्भाग्यदोषोऽयं याऽहं युष्मानजीजनम् ।
दुःखायासभुजोऽत्यर्थं युक्तानप्युत्तमैर्गुणैः ॥ १५ ॥

मङ्गल की इच्छा करती हूँ। तुम प्रसन्नता से अपने पतियों के साथ जाओ। राह में तुम पर कोई विपत्ति न आवेगी। सभी स्त्रियां यह जानती हैं, कि होनहार टल नहीं सकती। हे पुत्री! तुम भी यही समझकर, सदा धर्म-मार्ग में चलती रह कर, पतियों की भलाई में अपना समय व्यतीत करती रहो। ऐसी दशा का विचार करके अपने आत्मा को क्लेश न पहुँचाना। धर्म और गुरुजन सदा तुम्हारी रक्षा करेंगे। तुम्हारा कल्याण शीघ्र होगा। हे पुत्री! तुमसे और अधिक क्या कहूँ! देखो, सहदेव अभी बालक ही है। इस लिए तुम सदा उसकी देख-भाल और रक्षा करना। यह अपनी दुर्दशा का विचार करके कभी दुःखित न होने पावे। यह सुनकर द्रौपदी, जो रजस्वला थी और जिसके सिर के बाल खुले हुए थे, यह कहकर कि 'ऐसा ही होवे' रोती हुई महल से बाहर निकली। उसके पीछे-पीछे शोक से विह्वल कुन्ती भी बाहर तक आई। वहां उसने अपने पुत्रों को, जिनके सब वस्त्र और गहने उतार लिये गये थे, देखा ॥४।१०॥

कुन्ती ने उन सब को मृगछाला पहने हुए, और लज्जा से नीचे को सिर झुकाए हुए देखकर सब को छाती से लगाया और महादुःखी होकर, विलाप करती हुई कहने लगी—हाय, कैसे बुरे दिन आ गये हैं, जो भूलकर भी अधर्म की राह पर पैर नहीं रखते। सदा यज्ञ, देवताओं की पूजा आदि धर्म-कर्म करने में ही अपना समय व्यतीत करते हैं, भक्ति और श्रद्धा के साथ जो देवताओं की और गुरुजनों की पूजा करते रहते हैं, उन्हीं उदारस्वभाव,

कथं वत्स्यथ दुर्गेषु वने ऋद्धिविनाकृताः ।
वीर्यसत्त्वबलोत्साहतेजोभिरकृशाः कृशाः ॥ १६ ॥
यद्येतदेवमज्ञास्यं वने वासो हि वो ध्रुवम् ।
शतशृङ्गान्मृते पाण्डौ नागमिष्यं गजाह्वयम् ॥ १७ ॥
धन्यं वः पितरं मन्ये तपोमेधान्वितं तथा ।
यः पुत्राधिमसंप्राप्य स्वर्गेच्छामकरोत्प्रियाम् ॥ १८ ॥
धन्यां चातीन्द्रियज्ञानामिमां प्राप्तां परां गतिम् ।
मन्ये तु माद्रीं धर्मज्ञां कल्याणीं सर्वथैव तु ॥ १९ ॥
रत्या मत्या च गत्या च ययाऽहमभिसन्धिता ।
जीवितप्रियतां मह्यं धिङ्मां संक्लेशभागिनीम् ॥ २० ॥
पुत्रका ! न विहास्ये वः कृच्छ्रलब्धान्प्रियान्सतः ।
साहं यास्यामि हि वनं हा कृष्णे ! किं जहासि माम् ॥ २१ ॥
अन्तवत्यसुधर्मेऽस्मिन्धात्रा किं नु प्रमादतः ।
ममाऽन्तो नैव विहितस्तेनाऽऽयुर्न जहाति माम् ॥ २२ ॥

सच्चरित्र पुरुषों में प्रधान पाण्डवों की ऐसी दुर्दशा क्यों हुई ! हाय ! मैं इस समय किसे अपराधी ठहराऊँ ! मैं अत्यन्त अभागिन और पापिन हूँ। मेरे ही भाग्य के दोष से यह सब कुछ हुआ है। ॥११।१४॥

हाय पुत्रो ! तुम क्यों इस अभागिन के पेट से पैदा हुए थे ! तुम बड़े गुणी और ज्ञानी पुरुषों में श्रेष्ठ हो; केवल इस अभागिन के गर्भ से उत्पन्न होने के दोष से ही इतना क्लेश पा रहे हो। हाय पुत्रो ! तुम लोग असाधारण बलवान् और वीर्यवान् होकर किस तरह घोर वन में अत्यन्त हीनवीर्य पुरुष की भांति समय बिताओगे। हाय ! जो मुझे ऐसा मालूम होता, कि तुमको वनवास होगा, तो शतशृंग पर्वत पर से महाराज पाण्डु के मरने पर यहां कभी न आती। हे पुत्रो ! तुम्हारे पिता धन्य हैं, क्योंकि वे स्वर्ग का सुख भोग रहे हैं और उनके साथ स्वर्ग को जानेवाली माद्री भी धन्य है; क्योंकि इस अभागिन की तरह उसे न सहने योग्य क्लेश और कठिन यातना नहीं भोगनी पड़ी। मैं अत्यन्त अभागिन और पापिन हूँ। मेरे जीवन को धिक्कार है। ॥१५।२०॥

पुत्रो ! तुम मुझको अकेली छोड़ कर कहां जाओगे ! मैं तुम्हारे साथ चलूँगी। तुम्हें छोड़कर मैं किसी तरह जीवित न रह सकूँगी। हाय ! पुत्री द्रौपदी तुम भी क्या मुझे छोड़कर चली जाओगी ! क्या विधाता ने मेरे शरीर का अन्त नहीं लिखा है, जो ऐसी विपत्ति में भी मेरे प्राण नहीं निकलते हैं। हे कृष्ण ! हे बलदेव जी के छोटे भाई ! इस समय तुम

हा कृष्ण! द्वारकावासिन्काऽसि संकर्पणानुज! ।
कस्मान्न त्रायसे दुःखान्मां चेमांश्च नरोत्तमान् ॥ २३ ॥
अनादिनिधनं ये त्वामनुध्यायन्ति वै नराः ।
तांस्त्वं पासीत्ययं वादः स गतो व्यर्थतां कथम्॥ २४ ॥
इमे सद्धर्ममाहात्म्ययशोवीर्यानुवर्तिनः ।
नाऽर्हन्ति व्यसनं भोक्तुं नन्वेषां क्रियतां दया ॥ २५ ॥
सेयं नीत्यर्थविज्ञेपु भीष्मद्रोणकृपादिषु ।
स्थितेषु कुलनाथेपु कथमापदुपागता ॥ २६ ॥
हा पाण्डो! हा महाराज! क्वासि? किं समुपेक्षसे? ।
पुत्रान्विवास्यतः साधूनरिभिर्द्यूतनिर्जितान् ॥ २७ ॥
सहदेव! निवर्तस्व ननु त्वमसि मे प्रियः ।
शरीरादपि माद्रेय! मां मा त्याक्षीः कुपुत्रवत् ॥ २८ ॥
व्रजन्तु भ्रातरस्तेऽमी यदि सत्याभिसन्धिनः ।
मत्परित्राणजं धर्ममिहैव त्वमवाप्नुहि ॥ २९ ॥
वैशम्पायन उवाच-एवं विलपतीं कुन्तीमभिवाद्य प्रणम्य च ।
पाण्डवा विगतानन्दा वनायैव प्रवव्रजुः ॥ ३० ॥
विदुरश्चापि तामार्तां कुन्तीमाश्वास्य हेतुभिः ।

कहा हो, जो मेरी और इनकी इस दुःख से रक्षा नहीं करते हो ? यह बात विख्यात है, कि जो कोई तुमको आदि और सनातन जानकर तुम्हारा ध्यान करता है, उसको तुम अपना दर्शन देकर उसके दुःख को दूर करते हो, अब क्या कारण है, जो सहायता नहीं करते। हे द्वारकावासी! ये पाण्डव बड़े ही धर्मात्मा, महात्मा, यशस्वी और पराक्रमी हैं, दुःख सहने के योग्य नहीं हैं। इन पर अपनी दया कीजिए ॥२१।२५॥

हे भीष्म! हे द्रोण! हे कृपाचार्य! तुम्हारे रहते पाण्डवों पर ऐसी विपत्ति कैसे आई? हाय महाराज पाण्डु! तुम नहीं जानते, कि तुम्हारे प्रिय पुत्रों की कैसी दुर्दशा हो रही है! शत्रु लोग तुम्हारे निरपराध पुत्रों को कपट के जुए में हराकर निकाले दे रहे हैं। हे माद्री के पुत्र सहदेव! तुम वन को न जाओ। तुम मुझको अपने शरीर से भी अधिक प्यारे हो। कुपुत्र की तरह मुझे दुःख देकर मत जाना। तुम्हारे ये सब भाई सत्यप्रतिज्ञ हैं। इसमे तुम इनको ही जाने दो। तुम यहीं रहकर मेरे जीवन की रक्षा करो। यही करने से तुमको श्रेष्ठ धर्म प्राप्त होगा। वैशम्पायन ने कहा—हे राजा जनमेजय! कुन्ती इस प्रकार विलाप करने लगीं। उनको प्रणाम

प्रावेशयद् गृहं क्षत्ता स्वयमार्ततरः शनैः ॥ ३१ ॥
धार्तराष्ट्रस्त्रियस्ताश्च निखिलेनोपलभ्य तत् ।
गमनं परिकर्षं च कृष्णाया द्यूतमण्डले ॥ ३२ ॥
रुरुदुः सुस्वनं सर्वा विनिन्दन्त्यः कुरून्भृशम् ।
दध्युश्च सुचिरं कालं करासक्तमुखाम्बुजाः ॥ ३३ ॥
राजा च धृतराष्ट्रस्तु पुत्राणामनयं तदा ।
ध्यायन्नुद्विग्नहृदयो न शान्तिमधिजग्मिवान् ॥ ३४ ॥
स चिन्तयन्ननेकाग्रः शोकव्याकुलचेतनः ।
क्षत्तुः संप्रेषयामास शीघ्रमागम्यतामिति ॥ ३५ ॥
ततो जगाम विदुरो धृतराष्ट्रनिवेशनम् ।
तं पर्यपृच्छत्संविग्नो धृतराष्ट्रो जनाधिपः ॥ ३६ ॥

इति श्रीमन्महाभारते सभापर्वणि अनुद्यूतपर्वणि द्रौपदीकुन्तीसंवादे एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

करके पाण्डव वन को चल दिये । ॥२६।३०॥

महामति विदुर जो स्वयं दुःखी थे, शोक से विह्वल बनी कुन्ती को तरह-तरह के विश्वास दिलानेवाले वाक्यों से धैर्य बँधाते हुए अपने घर ले गये। राजा धृतराष्ट्र के महल की स्त्रियां भी द्यूतसभा में द्रौपदी की वैसी दुर्दशा होने का वृत्तान्त सुनकर और यह जानकर, कि द्रौपदी भी पाण्डवों के साथ वन को गई है, व्यथित होकर, कौरवों की निन्दा करती हुई रोने लगी। अपने पुत्रों के अन्याय पर विचार करने से धृतराष्ट्र का चित्त भी बहुत चञ्चल हो उठा। उन्होंने शोक और मोह के वश होकर, जब चैन न पाई तब विदुर जी को बुला कर वे उनसे आगे के कर्तव्य के बारे में पूछने लगे ॥३१।३६॥

सभापर्व का उन्नासीवां अध्याय समाप्त हुआ ॥ ७९ ॥

अथ अशीतितमोऽध्यायः ॥ ८० ॥

वैशम्पायन उवाच- समागतमथो राजा विदुरं दीर्घदर्शिनम् ।
साशङ्क इव पप्रच्छ धृतराष्ट्रोऽम्बिकासुतः ॥ १ ॥
धृतराष्ट्र उवाच—कथं गच्छति कौन्तेयो धर्मपुत्रो युधिष्ठिरः ।
भीमसेनः सव्यसाची माद्रीपुत्रौ च पाण्डवौ ॥ २ ॥
धौम्यश्चैव कथं क्षत्तर्द्रौपदी च यशस्विनी ।
श्रोतुमिच्छाम्यहं सर्वं तेषां शंस विचेष्टितम् ॥ ३ ॥

विदुर उवाच—वस्त्रेण संवृत्य मुखं कुन्तीपुत्रो युधिष्ठिरः ।
बाहू विशालौ संपश्यन्भीमो गच्छति पाण्डवः ॥ ४ ॥
सिकता वपन्सव्यसाची राजानमनुगच्छति ।
माद्रीपुत्रः सहदेवो मुखमालिप्य गच्छति ॥ ५ ॥
पांसूपलिप्तसर्वाङ्गो नकुलश्चित्तविह्वलः ।
दर्शनीयतमो लोके राजानमनुगच्छति ॥ ६ ॥
कृष्णा तु केशैः प्रच्छाद्य मुखमायतलोचना ।
दर्शनीया प्ररुदती राजानमनुगच्छति ॥ ७ ॥
धौम्यो रौद्राणि सामानि याम्यानि च विशांपते ! ।
गायन्गच्छति मार्गेषु कुशानादाय पाणिना ॥ ८ ॥
धृतराष्ट्र उवाच—विविधानीह रूपाणि कृत्वा गच्छन्ति पाण्डवाः ।
तन्ममाऽऽचक्ष्व विदुर ! कस्मादेवं व्रजन्ति ते ॥ ९ ॥
विदुर उवाच—निकृतस्यापि ते पुत्रैर्हृते राज्ये धनेषु च ।
न धर्माच्चलते बुद्धिर्धर्मराजस्य धीमतः ॥ १० ॥
योऽसौ राजा घृणी नित्यं धार्तराष्ट्रेषु भारत ! ।
निकृत्या भ्रंशितः क्रोधान्नोन्मीलयति लोचने ॥ ११ ॥

अस्सीवां अध्याय ॥ ८० ॥

वैशम्पायन कहते हैं—हे राजा जनमेजय ! अत्यन्त भय से व्याकुल धृतराष्ट्र ने विदुर को आया हुआ जानकर पूछा—हे विदुर ! पाण्डव लोग द्रौपदी और धौम्य के साथ वन को किस तरह जा रहे हैं ! विदुर ने कहा—हे महाराज ! युधिष्ठिर अपने मुख को कपड़े से ढके हुए, भीमसेन अपनी भुजाओं को देखता हुआ, अर्जुन बालू को पृथ्वी पर फेंकता हुआ, सहदेव मुख पर भस्म लगाता हुआ, नकुल अपने शरीर में धूल मलता हुआ, द्रौपदी अपने खुले हुए बालों से मुख को ढके हुए और रोती हुई, और धौम्य पुरोहित हाथ में कुशा लिये हुए सामवेद के उन मन्त्रों को पढ़ते हुए, जिनके देवता यम और रुद्र हैं, जा रहे हैं। युधिष्ठिर सब के आगे हैं और युधिष्ठिर के पीछे और सब हैं ॥१।८॥

यह सुनकर धृतराष्ट्र ने पूछा—पाण्डव लोग इस प्रकार से नाना प्रकार के रूप बना कर क्यों जा रहे हैं ? विदुर ने कहा—हे राजन् ! यद्यपि आप के पुत्रों ने युधिष्ठिर का धन और राज्य छल करके ले लिया है, परन्तु युधिष्ठिर अपने धर्म को छोड़ना नहीं चाहते हैं। इससे उन्होंने तुम्हारे पुत्रों पर दया करके इस विचार से कि जो मैं अपनी क्रोध भरी हुई आँखें खोल दूंगा, तो घोर कर्म करनेवाले दुर्योधन आदि

नाऽहं जनं निर्दहेयं दृष्ट्वा घोरेण चक्षुषा ।
स पिधाय मुखं राजा तस्माद्गच्छति पाण्डवः ।
यथा च भीमो व्रजति तन्मे निगदतः शृणु ॥ १२ ॥
बाह्वोर्बले नास्ति समो ममेति भरतर्षभ ! ।
बाहू विशालौ कृत्वाऽसौ तेन भीमोऽपि गच्छति ॥ १३ ॥
बाहू विदर्शयन्राजन् ! बाहुद्रविणदर्पितः ।
चिकीर्षन्कर्म शत्रुभ्यो बाहुद्रव्यानुरूपतः ॥ १४ ॥
प्रदिशञ्छरसंपातान्कुन्तीपुत्रोऽर्जुनस्तदा ।
सिकता वपन्सव्यसाची राजानमनुगच्छति ॥ १५ ॥
असक्ताः सिकतास्तस्य यथा संप्रति भारत ! ।
असक्तं शरवर्षाणि तथा मोक्ष्यति शत्रुषु ॥ १६ ॥
न मे कश्चिद्विजानीयान्मुखमद्येति भारत ! ।
मुखमालिप्य तेनासौ सहदेवोऽपि गच्छति ॥ १७ ॥
नाहं मनांस्याददेयं मार्गे स्त्रीणामिति प्रभो ! ।
पांसूपलिप्तसर्वाङ्गो नकुलस्तेन गच्छति ॥ १८ ॥
एकवस्त्रा प्ररुदती मुक्तकेशी रजस्वला ।
शोणितेनाक्तवसना द्रौपदी वाक्यमब्रवीत् ॥ १९ ॥
यत्कृतेऽहमिदं प्राप्ता तेषां वर्षे चतुर्दशे ।

भस्म हो जायेंगे, अपने मुख को कपड़े से ढक लिया है ॥९।१२॥

भीमसेन यह सोचकर कि "बाहु बल में मेरे समान और कोई नहीं है" युद्ध में घोर कर्म करने के इरादे से बार बार भुजाओं को ताकते जा रहे हैं। अर्जुन जो बालू उड़ाते जा रहे हैं, उसका अभिप्राय यही है कि वे युद्ध में उसी तरह शत्रुओं पर बाणों की वर्षा करेंगे। सहदेव ने इस लिये मुख में भस्म लगा ली है, कि उन्हें कोई पहचान न सके। नकुल बहुत ही सुन्दर पुरुष हैं; राह में उनको देखकर स्त्रियां मोहित न हो जायँ, इस विचार से वन जाते समय उन्होंने सारे शरीर में मिट्टी लगा ली है। लोहू से भरी हुई, एक ही वस्त्र पहने, रोती हुई रजस्वला द्रौपदी दुःशासन के पकड़े हुए बालों को खोले यह कहती जा रही है, कि जिनके कारण मुझे यह दुःख प्राप्त हुआ है उनकी स्त्रियां चौदहवें वर्ष पुत्र, पति, बन्धुजन आदि के मरने से शोक में पीड़ित और लोहू से तर होकर, मिट्टी से भरी हुई,

हतपत्न्यो हतसुता हतबन्धुजनप्रियाः ॥ २० ॥
बहुशोणितदिग्धाङ्ग्यो मुक्तकेश्यो रजस्वलाः ।
एवं कृतोदका भार्याः प्रवेक्ष्यन्ति गजाह्वयम् ॥ २१ ॥
कृत्वा तु नैर्ऋतान्दर्भान्धीरो धौम्यः पुरोहितः ।
सामानि गायन्याम्यानि पुरतो याति भारत ! ॥ २२ ॥
हतेषु भरतेष्वाजौ कुरूणां गुरवस्तदा ।
एवं सामानि गास्यन्तीत्युक्त्वा धौम्योऽपि गच्छति ॥ २३ ॥
हा हा गच्छन्ति नो नाथाः समवेक्षध्वमीदृशम् ।
अहो धिक्कुरुवृद्धानां बालानामिव चेष्टितम् ॥ २४ ॥
राष्ट्रेभ्यः पाण्डुदायादाँल्लोभान्निर्वासयन्ति ये ।
अनाथाः स्म वयं सर्वे वियुक्ताः पाण्डुनन्दनैः ॥ २५ ॥
दुर्विनीतेषु लुब्धेषु का प्रीतिः कौरवेषु नः ।
इति पौराः सुदुःखार्ताः क्रोशन्ति स्म पुनः पुनः ॥ २६ ॥
एवमाकारलिङ्गैस्ते व्यवसायं मनोगतम् ।
कथयन्तश्च कौन्तेया वनं जग्मुर्मनस्विनः ॥ २७ ॥
एवं तेषु नराग्र्येषु निर्यत्सु गजसाह्वयात् ।
अनभ्रे विद्युतश्चाऽऽसन्भूमिश्च समकम्पत ॥ २८ ॥

बाल खोले, मेरी तरह रोती हुई, भाई-बन्धुओं को तिलोदक देकर हस्तिनापुर में जायँगी ॥१३।२१॥

पुरोहित धौम्य नैर्ऋतनाम कुशा हाथ में लिये भयङ्कर याम्य साम पढ़ते जो जा रहे हैं उसका अभिप्राय यही है कि कौरवों के मारे जाने पर उनके पुरोहित भी, इसी तरह, घोर साम-मन्त्रों का पाठ करते हुए आगे-आगे चलेंगे। सब नगर के रहने वाले अत्यन्त दुःखित होकर आपस में कह रहे हैं कि हाय, देखो, हमारी रक्षा करने वाले पाण्डवों को कपट से कौरवों ने राज्य से भ्रष्ट कर दिया है। पाण्डव लोग उनके अन्याय से वन को चले जा रहे हैं। कुरु वंश के वृद्ध लोग चुपचाप यह देख रहे हैं। अहो उन बालकों की सी बुद्धि रखनेवाले वृद्धों को धिक्कार है। महाराज पाण्डु के उत्तराधिकारियों को लोभ के कारण राज्य से भ्रष्ट करनेवाले कौरवों को बार बार धिक्कार है। पाण्डवों के वियोग से हम लोग अनाथ हुए जा रहे हैं। लोभी और घमण्डी कौरवों पर हमें तनिक भी प्रेम नहीं है। हे महाराज! नगर-वासी लोग इस तरह कहकर विलाप कर रहे हैं। वे पाण्डव उक्त रीति से अपने मन की बात को रूप और चिह्नों से दर्शाते हुए वन की ओर चले गये। हे राजा धृतराष्ट्र! पाण्डवों के हस्तिनापुर से

राहुरग्रसदादित्यमपर्वणि विशांपते ।
उल्का चाप्यपसव्येन पुरं कृत्वा व्यशीर्यत ॥ २९ ॥
प्रत्याहरन्ति क्रव्यादा गृध्रगोमायुवायसाः ।
देवायतनचैत्येषु प्राकाराट्टालकेषु च ॥ ३० ॥
एवमेते महोत्पाताः प्रादुरासन्दुरासदाः ।
भरतानामभावाय राजन्! दुर्मन्त्रिते तव ॥ ३१ ॥

वैशम्पायन उवाच-एवं प्रवदतोरेव तयोस्तत्र विशांपते! ।
धृतराष्ट्रस्य राज्ञश्च विदुरस्य च धीमतः ॥ ३२ ॥
नारदश्च सभामध्ये कुरूणामग्रतः स्थितः ।
महर्षिभिः परिवृतो रौद्रं वाक्यमुवाच ह ॥ ३३ ॥
इतश्चतुर्दशे वर्षे विनङ्क्ष्यन्तीह कौरवाः ।
दुर्योधनापराधेन भीमार्जुनबलेन च ॥ ३४ ॥
इत्युक्त्वा दिवमाक्रम्य क्षिप्रमन्तरधीयत ।
ब्राह्मीं श्रियं सुविपुलां बिभ्रद्देवर्षिसत्तमः ॥ ३५ ॥
ततो दुर्योधनः कर्णः शकुनिश्चापि सौबलः ।
द्रोणं द्वीपममन्यन्त राज्यं चास्मै न्यवेदयन् ॥ ३६ ॥
अथाऽब्रवीत्ततो द्रोणो दुर्योधनममर्षणम् ।

निकलते ही बिना बादल के आकाश से पानी की वर्षा हुई, पृथ्वी में भूकम्प हुआ, राहु ने बिना पर्व के सूर्य को ग्रस लिया और नगर के दहिनी ओर उल्कापात हुआ। और देवताओं के मन्दिर, अटारिया और यज्ञस्थान की सीवों के वृक्षों पर मास खाने वाले गृद्ध और काग आदि पक्षी और गीदड़ बोलने लगे। इसलिये हे राजा धृतराष्ट्र! ये सम्पूर्ण उत्पात तुम्हारे खोटे मंत्र के कारण से भरतकुल के नाश होने के निमित्त हुए हैं ॥२२।३१॥

वैशम्पायन ने कहा—हे राजा जनमेजय! जिस समय विदुर जी धृतराष्ट्र से उक्त प्रकार से कह रहे थे उसी समय उन कौरवों की सभा में नारद जी महाऋषियों को साथ लिये हुए आये और कहने लगे, कि आज से चौदहवें वर्ष में दुर्योधन के अपराध के कारण से भीमसेन, अर्जुन के बल से सब कौरवों का नाश होगा। यह कहकर नारद जी ब्राह्मी कान्ति को धारण किये हुये शीघ्र आकाशमार्ग में जाकर अन्तर्द्धान हो गये। उनके ये वचन सुनकर दुर्योधन, कर्ण और शकुनि बहुत ही भयभीत हुए। दुर्योधन ने द्रोणाचार्य को ही अपनी रक्षा करनेवाला समझ कर, यह सत्कार आदि से उन्हें सन्तुष्ट रखने की चेष्टा करने लगा ॥३२।३६॥

दुःशासनं च कर्णं च सर्वानेव च भारतान् ॥ ३७ ॥
अवध्यान्पाण्डवान्प्राहुर्देवपुत्रान्द्विजातयः ।
अहं वै शरणं प्राप्तान्वर्तमानो यथाबलम् ॥ ३८ ॥
गन्ता सर्वात्मना भक्त्या धार्तराष्ट्रान्सराजकान् ।
नोत्सहेयं परित्यक्तुं दैवं हि बलवत्तरम् ॥ ३९ ॥
धर्मतः पाण्डुपुत्रा वै वनं गच्छन्ति निर्जिताः ।
ते च द्वादश वर्षाणि वने वत्स्यन्ति पाण्डवाः ॥ ४० ॥
चरितब्रह्मचर्याश्च क्रोधामर्षवशानुगाः ।
वैरं निर्यातयिष्यन्ति महद् दुःखाय पाण्डवाः ॥ ४१ ॥
मया च भ्रंशितो राजन्द्रुपदः सखिविग्रहे ।
पुत्रार्थमयजद्राजा वधाय मम भारत ! ॥ ४२ ॥
याजोपयाजतपसा पुत्रं लेभे स पावकात् ।
धृष्टद्युम्नं द्रौपदीं च वेदीमध्यात्सुमध्यमाम् ॥ ४३ ॥
धृष्टद्युम्नस्तु पार्थानां श्यालः संबन्धतो मतः ।
पाण्डवानां प्रियरतस्तस्मान्मां भयमाविशत् ॥ ४४ ॥
ज्वालावर्णो देवदत्तो धनुष्मान्कवची शरी ।

तब द्रोणाचार्य ने दुर्योधन, दुःशासन और कर्ण और सब भरतवंशियों से कहा—ब्राह्मणों का कहना है, कि देवपुत्र पाण्डव अवध्य हैं, किन्तु मैं प्रतिज्ञा करता हूँ, कि मैं शरणागत धृतराष्ट्र और उनके पुत्रों को नहीं छोड़ सकता। मैं यथाशक्ति राजभक्ति से विमुख न होऊँगा। परन्तु होनहार बड़ी बलवान् है; जो होना है सो अवश्य होगा। धर्म से जीते गये पाण्डव धर्मपालन के लिये वन को चले जा रहे हैं। ब्रह्मचर्य धारण करके वे बारह वर्ष तक वन में रहेंगे। इसके पश्चात् जब लौटेंगे तब इस वैर का बदला अवश्य लेंगे ॥३७।४०॥

देखो, मेरे मित्र राजा द्रुपद ने जब मेरा अपमान किया था, तब बदला लेने के लिये मैंने भी इन्हें अर्जुन के द्वारा हराकर राज्य से भ्रष्ट कर दिया था। इस पर कुपित होकर राजा द्रुपद ने मुझे मारनेवाला पुत्र पैदा होने की इच्छा करके एक घोर यज्ञ किया। याज और उपयाज ऋषियों की तपस्या के प्रभाव से द्रुपद के पुत्र हुआ। अग्निकुण्ड से एक पुत्र धृष्टद्युम्न और एक कन्या द्रौपदी निकली। धृष्टद्युम्न पाण्डवों का साला है। इसे पाण्डव बहुत प्यारे हैं। इसी से मुझे भय है। उसका रंग अग्नि की ज्वाला सा ऐसा है। वह देवताओं का दिया हुआ धृष्टद्युम्न कवच, धनुष, बाण आदि लिये हुए पैदा हुआ है। मनुष्यमात्र मृत्यु से बच नहीं सकते। मैं भी मनुष्य

मर्त्यधर्मतया तस्मादद्य मे साध्वसो महान् ॥ ४५ ॥
गतो हि पक्षतां तेषां पार्षतः परवीरहा ।
रथातिरथसंख्यायां योऽग्रणीरर्जुनो युवा ॥ ४६ ॥
सुदृष्टप्राणो भृशतरं तेन चेत्संगमो मम ।
किमन्यद् दुःखमधिकं परमं भुवि कौरवाः ! ॥ ४७ ॥
धृष्टद्युम्नो द्रोणमृत्युरिति विप्रथितं वचः ।
मद्वधाय श्रुतोऽप्येष लोके चाऽप्यतिविश्रुतः ॥ ४८ ॥
सोऽयं नूनमनुप्राप्तस्त्वत्कृते काल उत्तमः ।
त्वरितं कुरुत श्रेयो नैतदेतावता कृतम् ॥ ४९ ॥
मुहूर्तं सुखमेवैतत्तालच्छायेव हैमनी ।
यजध्वं च महायज्ञैर्भोगानश्नीत दत्त च ॥ ५० ॥
इतश्चतुर्दशे वर्षे महत्प्राप्स्यथ वैशसम् ।
द्रोणस्य वचनं श्रुत्वा धृतराष्ट्रोऽब्रवीदिदम् ॥ ५१ ॥
सम्यगाह गुरुः क्षत्तरुपावर्तय पाण्डवान् ।
यदि ते न निवर्तन्ते सत्कृता यान्तु पाण्डवाः ।
सशस्त्ररथपादाता भोगवन्तश्च पुत्रकाः ॥ ५२ ॥

इति श्रीमन्महाभारते सभापर्वणि अनुद्यूतपर्वणि विदुरधृतराष्ट्रद्रोणवाक्ये अशीतितमोऽध्यायः ॥८०॥

हूँ, अतएव मुझे धृष्टद्युम्न के हाथ से अपनी मृत्यु का डर है। यह बात प्रसिद्ध है कि धृष्टद्युम्न द्रोणाचार्य का काल है। वह पाण्डवों की ओर से अवश्य युद्ध करेगा, इसलिये तुम सब सावधान हो जाओ। देखो, अर्जुन का नाम महारथी और रथी पुरुषों में सब से पहले लिया जाता है। वह मुझे प्राणों से भी अधिक प्रिय है, किन्तु तुम्हारे लिये मुझे उस अर्जुन से भी युद्ध करना पड़ेगा, इससे बढ़कर दुःख की बात और क्या हो सकती है? तथापि मैं तुम्हारे लिये युद्ध करूँगा और धृष्टद्युम्न के हाथ में यदि मृत्यु लिखी है तो वह भी सत्य होगी। हे दुर्योधन! तुम्हारा यह राज्य और सुख-सम्पत्ति सब शीतकाल की ताड़ के पेड़ की छाया के समान है। तुमने अपने हाथों अपना नाश कर लिया है। अच्छा, अब तुम यज्ञ करो, दान दो और सुख भोगो। अब से तेरह वर्ष व्यतीत होने पर तुम्हारा नाश हो जायगा। यह सुनकर धृतराष्ट्र ने कहा—हे विदुर! आचार्य ठीक कहते हैं। तुम जल्दी से जाकर पाण्डवों को लौटा लाओ। और यदि वे वन से लौटने के लिये सम्मत न हों तो धन आदि देकर उनका सत्कार

करो और हाथी, घोड़े, पैदल हथियारबन्द सिपाही आदि उनके साथ कर दो, जिसमें उन्हें कुछ कष्ट न मिले ॥ ४१।५२॥

— * —

सभापर्व का अस्सीवां अध्याय समाप्त हुआ ॥ ८० ॥

अथ एकाशीतितमोऽध्यायः ॥ ८१ ॥

वैशम्पायन उवाच-वनं गतेषु पार्थेषु निर्जितेषु दुरोदरे ।
धृतराष्ट्रं महाराज ! तदा चिन्ता समाविशत् ॥ १ ॥
तं चिन्तयानमासीनं धृतराष्ट्रं जनेश्वरम् ।
निःश्वसन्तमनेकाग्रमिति होवाच संजयः ॥ २ ॥
सञ्जय उवाच—अवाप्य वसुसंपूर्णां वसुधां वसुधाधिप ! ।
प्रव्राज्य पाण्डवान्राज्याद्राजन् ! किमनुशोचसि ?॥ ३ ॥
धृतराष्ट्र उवाच—अशोच्यत्वं कुतस्तेषां येषां वैरं भविष्यति ।
पाण्डवैर्युद्धशौण्डैर्हि बलवद्भिर्महारथैः ॥ ४ ॥
सञ्जय उवाच—तवेदं सुकृतं राजन्महद्वैरमुपस्थितम् ।
विनाशो येन लोकस्य सानुबन्धो भविष्यति ॥ ५ ॥
वार्यमाणो हि भीष्मेण द्रोणेन विदुरेण च ।
पाण्डवानां प्रियां भार्यां द्रौपदीं धर्मचारिणीम् ॥ ६ ॥
प्राहिणोदानयेहेति पुत्रो दुर्योधनस्तव ।
सूतपुत्रं सुमन्दात्मा निर्लज्जः प्रातिकामिनम् ॥ ७ ॥

इक्यासीवां अध्याय ॥ ८१ ॥

वैशम्पायन ने कहा—हे राजा जनमेजय ! उधर कपट के जुए में हार कर, पाण्डव वन को गये, और इधर धृतराष्ट्र अत्यन्त खिन्न होकर अकेले में बैठा लम्बी सांसें लेने लगा। वह गहरी चिन्ता में डूबा हुआ था। इसी समय उसके पास सञ्जय आया और हाथ जोड़कर कहने लगा—हे राजन् ! पाण्डवों को वनवास देकर इस समय तो तुम समुद्र पर्यन्त पृथ्वी के अद्वितीय स्वामी बन चुके हो। अब तुम किस बात की चिन्ता कर रहे हो ! ॥१।३॥

यह सुनकर धृतराष्ट्र ने कहा—महारथी, बलवान् और चतुर पाण्डवों के साथ जो शत्रुता कर चुका है, वह क्योंकर निश्चिन्त और सुखी हो सकता है ? सञ्जय ने कहा, हे महाराज ! तुम्हारी ही कृपा से इस घोर शत्रुता का आरम्भ हुआ है। [ यदि तुम इस द्यूतक्रीड़ा का अनुमोदन न करते, तो कभी यह स्थिति न आती ] पाण्डवों के साथ शत्रुता करने का फल यही होगा, कि सब लोग अकाल में ही मारे जावेंगे। देखो, तुम्हारे निर्लज्ज और मन्दबुद्धि

यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽवाचीनानि पश्यति ॥ ८ ॥
बुद्धौ कलुषभूतायां विनाशे समुपस्थिते ।
अनयो नयसङ्काशो हृदयान्नाऽपसर्पति ॥ ९ ॥
अनर्थाश्चाऽर्थरूपेण अर्थाश्चाऽनर्थरूपिणः ।
उत्तिष्ठन्ति विनाशाय नूनं तच्चास्य रोचते ॥ १० ॥
न कालो दण्डमुद्यम्य शिरः कृन्तति कस्यचित् ।
कालस्य बलमेतावद्विपरीतार्थदर्शनम् ॥ ११ ॥
आसादितमिदं घोरं तुमुलं लोमहर्षणम् ।
पाञ्चालीमपकर्षद्भिः सभामध्ये तपस्विनीम् ॥ १२ ॥
अयोनिजां रूपवतीं कुले जातां विभावसोः ।
को नु तां सर्वधर्मज्ञां परिभूय यशस्विनीम् ॥ १३ ॥
पर्यानयेत्सभामध्ये विना दुर्द्यूतदेविनम् ।
स्त्रीधर्मिणी वरारोहा शोणितेन परिप्लुता ॥ १४ ॥
एकवस्त्राऽथ पाञ्चाली पाण्डवानभ्यवेक्षत ।
हृतस्वान्हृतराज्यांश्च हृतवस्त्रान्हृतश्रियः ॥ १५ ॥
विहीनान्सर्वकामेभ्यो दासभावमुपागतान् ।

पुत्र दुर्योधन ने भीष्म, द्रोणाचार्य और विदुर जी के मना करने पर भी प्रातिकामी को भेजकर धर्मचारिणी द्रौपदी को सभा में बुलवाया। सत्य है, जिसको देवता लोग नष्ट करना चाहते हैं, उसकी बुद्धि पहले ही से हर लेते हैं ॥४।८॥

और जब नाश का समय सिर पर आ जाता है, तब बुद्धि के पापरूप हो जाने से अनीति ही नीति जान पड़ती है। और हित अनहित और अनहित हित दिखाई देता है, और वही उसको अच्छा जान पड़ता है। काल, दण्ड उठाकर, किसी के सिर को नहीं फोड़ता। काल का बल यही है, कि वह विपरीत बातें सुझाता है। सभा में पतिव्रता, धर्मपरायणा द्रौपदी को खींच लाकर दुर्योधन आदि ने यह भयानक अनर्थ खड़ा कर लिया है ॥९।१२॥

दुष्टमति, जुआरी नीचों के सिवा, और कौन अयोनिजा, रूपवती, अग्निकुण्ड में से प्रकट हुई और सब धर्मों को जाननेवाली यशस्विनी द्रौपदी को इस तरह बाल पकड़कर सभा में घसीट लाने का साहस कर सकता है? इसके सिवा, जब वह द्रौपदी अपने रजस्वला धर्म में रुधिर से भरी हुई, एक वस्त्र पहने हुए अपने पतियों को, जो धन, राज्य और वस्त्रों को हार जाने के कारण से, दास होकर धर्म-

धर्मपाशपरिक्षिप्तानशक्तानिव विक्रमे ॥ १६ ॥
क्रुद्धां चानर्हतीं कृष्णां दुःखितां कुरुसंसदि ।
दुर्योधनश्च कर्णश्च कटुकान्यभ्यभापताम् ॥ १७ ॥
इति सर्वमिदं राजन्नाकुलं प्रतिभाति मे ।

धृतराष्ट्र उवाच—तस्याः कृपणचक्षुर्भ्यां प्रदह्येतापि मेदिनी ॥ १८ ॥
अपि शेषं भवेदद्य पुत्राणां मम संजय ! ।
भरतानां स्त्रियः सर्वा गान्धार्या सह सङ्गताः ॥ १९ ॥
प्राक्राशन्भैरवं तत्र दृष्ट्वा कृष्णां सभागताम् ।
धर्मिष्ठां धर्मपत्नीं च रूपयौवनशालिनीम् ॥ २० ॥
प्रजाभिः सह संगम्य ह्यनुशोचन्ति नित्यशः ।
अग्निहोत्राणि सायाह्ने न चाऽहूयन्त सर्वशः ॥ २१ ॥
ब्राह्मणाः कुपिताश्चाऽऽसन्द्रौपद्याः परिकर्षणे ।
आसीन्निष्ठानको घोरो निर्घातश्च महानभूत् ॥ २२ ॥
दिव उल्काश्चाऽपतन्त राहुश्चाऽर्कमुपाग्रसत् ।
अपर्वणि महाघोरं प्रजानां जनयन्भयम् ॥ २३ ॥
तथैव रथशालासु प्रादुरासीद्धुताशनः ।
ध्वजाश्चापि व्यशीर्यन्त भरतानामभूतये ॥ २४ ॥

पाश में बँधे होने के कारण से, पराक्रम भी प्रकट नहीं कर सकते थे, देख रही थी। उस समय दुर्योधन और कर्ण ने उस दुखिया से, जो अनादर करने के योग्य नहीं थी, कड़वे वचन कहे। हे महाराज ! मुझे तो ये सब कौरवों के नाश के ही लक्षण देख पड़ते हैं ॥१३।१७॥

यह सुनकर धृतराष्ट्र ने कहा—हे सञ्जय ! तुम सत्य कहते हो, कि वह द्रौपदी अपनी क्रोधभरी हुई आंखों से देखकर पृथ्वी को भी भस्म कर सकती है। मुझे जान पड़ता है, कि मेरे पुत्र भी इस कुकर्म का फल अवश्य भोगेंगे—उनका नाश हो जायगा। देखो, जब सब भरतवंश की स्त्रियां गांधारी-सहित उस धर्मिष्ठा, युवति, धर्मपत्नी और स्वरूपवती द्रौपदी को सभा में आई हुई देखकर रो रहीं थीं, और ब्राह्मणों ने उसके सभा में लाने को देखकर क्रोध किया था और सायंकाल को अग्निहोत्र भी नहीं किया था, तब प्रचण्ड आंधी चलने लगी, वज्र के गिरने का सा शब्द हुआ, दिन में उल्कापात होने लगे, और पर्व न होने पर भी राहु ने सूर्य को ग्रस लिया। इसी प्रकार से रथशालाओं में अपने आप आग लग गई ॥१८।२३॥

ध्वजाएँ टूट-टूट कर गिरने लगीं, और दुर्योधन

दुर्योधनस्याऽग्निहोत्रे प्राक्रोशन्भैरवं शिवाः ।
तास्तदा प्रत्यभाषन्त रासभाः सर्वतो दिशः ॥ २५ ॥
प्रातिष्ठत ततो भीष्मो द्रोणेन सह संजय ! ।
कृपश्च सोमदत्तश्च वाह्लीकश्च महामनाः ॥ २६ ॥
ततोऽहमब्रुवं तत्र विदुरेण प्रचोदितः ।
वरं ददानि कृष्णायै काङ्क्षितं यद्यदिच्छति ॥ २७ ॥
अवृणोत्तत्र पाञ्चाली पाण्डवानामदासताम् ।
सरथान्सधनुष्कांश्चाऽप्यनुज्ञासिषमप्यहम् ॥ २८ ॥
अथाऽब्रवीन्महाप्राज्ञो विदुरः सर्वधर्मवित् ।
एतदन्तास्तु भरता यद्वः कृष्णा सभां गता ॥ २९ ॥
यैषा पाञ्चालराजस्य सुता सा श्रीरनुत्तमा ।
पाञ्चाली पाण्डवानेतान्दैवसृष्टोपसर्पति ॥ ३० ॥
तस्याः पार्थाः परिक्लेशं न क्षंस्यन्ते ह्यमर्षणाः ।
वृष्णयो वा महेष्वासाः पञ्चाला वा महारथाः ॥ ३१ ॥
तेन सत्याभिसन्धेन वासुदेवेन रक्षिताः ।
आगमिष्यति बीभत्सुः पञ्चालैः परिवारितः ॥ ३२ ॥

की यज्ञशाला के पास सियार बड़े भयानक शब्द से बोलने लगे, चारों ओर गधे कठोर स्वर से रेंकने लगे। यह देखकर भीष्म, द्रोणाचार्य, बाह्लीक, सोमदत्त और कृपाचार्य आदि धर्मात्मा लोग सभा से उठकर चल दिये, तब विदुर जी के कहने से मैंने द्रौपदी से वरदान मांगने के लिये कहा। पतिव्रता द्रौपदी ने शस्त्र-सहित पाण्डवों को दास-भाव से छुटकारा ही मुझसे मांगा और मैंने वह वर उसे दे दिया। इसके पश्चात् सब धर्मों के ज्ञाता विदुर ने मुझसे कहा था—हे राजन् ! पाञ्चालराज की पुत्री साक्षात् लक्ष्मी है। वह सभा में इस तरह लाई गई और उसका अपमान किया गया। इसमे निश्चय समझिए कि भरतवंशियों का अन्त यहीं से आरम्भ हुआ। देखो, पाञ्चाली पाण्डवों के साथ वन को जा रही है। इसके ऐसे अपमान और क्लेश को पाण्डव कभी नहीं सह सकते ॥२४।३०॥

द्रौपदी के अपमान को महारथी राजा द्रुपद और वृष्णिवंशी लोग सहन करने के नहीं। पाण्डवों के रक्षक तथा सहायक स्वयं श्रीकृष्ण हैं। जिस समय अर्जुन पाञ्चाल देश की सेना लेकर आवेगा, और भीमसेन उस सेना में अपनी गदा को घुमाता हुआ युद्ध के लिये खड़ा होगा, उस समय कोई राजा अर्जुन के गाण्डीव धनुष के शब्द को सुनकर, भीमसेन की गदा के वेग को न सह सकेगा। इसलिये

तेषां मध्ये महेष्वासो भीमसेनो महाबलः ।
आगमिष्यति धुन्वानो गदां दण्डमिवाऽन्तकः ॥ ३३ ॥
ततो गाण्डीवनिर्घोषं श्रुत्वा पार्थस्य धीमतः ।
गदावेगं च भीमस्य नालं सोढुं नराधिपाः ! ॥ ३४ ॥
तत्र मे रोचते नित्यं पार्थैः साम न विग्रहः ।
कुरुभ्यो हि सदा मन्ये पाण्डवान्बलवत्तरान् ॥ ३५ ॥
तथा हि बलवान्राजा जरासन्धो महाद्युतिः ।
बाहुप्रहरणेनैव भीमेन निहतो युधि ॥ ३६ ॥
तस्य ते शम एवास्तु पाण्डवैर्भरतर्षभ ! ।
उभयोः पक्षयोर्युक्तं क्रियतामविशङ्कया ॥ ३७ ॥
एवं कृते महाराज ! परं श्रेयस्त्वमाप्स्यसि ।
एवं गावल्गणे क्षत्ता धर्मार्थसहितं वचः ।
उक्तवान्न गृहीतं वै मया पुत्रहितैषिणा ॥ ३८ ॥

इति श्रीमन्महाभारते सभापर्वणि अनुद्यूतपर्वणि धृतराष्ट्रसंजयसंवादे एकाशीतितमोऽध्यायः ॥ ८१ ॥
समाप्तं च अनुद्यूत पर्व । इति सभापर्व समाप्तम् ॥

मैं पाण्डवों के साथ विग्रह करना अच्छा नहीं समझता हूं। मेरी समझ में पाण्डवों से द्रोह न करके मेल ही करना अच्छा है ॥३१।३४॥

मैं पाण्डवों को कौरवों से सदैव अधिक बलवान् जानता हूँ। देखो, राजा जरासन्ध जो बड़ा तेजस्वी और बलवान् था भीमसेन के हाथों से मारा गया। इसलिये पाण्डवों से तुम्हारा मेल ही रहे, तो अच्छा है। तुम दोनों ओर के बलाबल को विचारकर शंका छोड़कर जैसा उचित समझो, वैसा करो। हे महाराज ! ऐसा करने से ही तुम्हारा कल्याण होगा। इसलिये हे सञ्जय ! विदुर जी ने यों धर्मार्थयुक्त वचन कहकर मुझे बहुत समझाया था; परन्तु मैंने अपने पुत्रों का हित करने के लिये उनकी सलाह को अङ्गीकार नहीं किया ॥३५।३८॥

सभापर्व का इक्यासीवां अध्याय समाप्त हुआ ॥ ८१ ॥

सभापर्व समाप्त हुआ ।

पृष्ठ १४२७ तक ।



श्रीमहर्षिव्यासप्रणीतम

# महाभारतम् ।

## अथ वनपर्व ।

आरण्यपर्व ।

अथ प्रथमोऽध्यायः ॥ १ ॥

ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥

जनमेजय उवाच- एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः ।
धार्तराष्ट्रैः सहामात्यैर्निकृत्या द्विजसत्तम ! ॥ १ ॥
श्राविताः परुषा वाचः सृजद्भिर्वैरमुत्तमम् ।
किमकुर्वत कौरव्या मम पूर्वपितामहाः ॥ २ ॥
कथं चैश्वर्यविभ्रष्टाः सहसा दुःखमीयुषः ।
वने विजह्रिरे पार्थाः शक्रप्रतिमतेजसः ॥ ३ ॥
के वै तानन्ववर्तन्त प्राप्तान्व्यसनमुत्तमम् ।
किमाचाराः किमाहाराः क्व च वासो महात्मनाम् ॥ ४ ॥
कथं च द्वादश समा वने तेषां महामुने ! ।

पहला अध्याय ॥ १ ॥

सभा में पाण्डवों को वनवास दिये जाने का हाल सुनकर राजा जनमेजय ने पूछा—हे वैशम्पायन जी! दुरात्मा धृतराष्ट्र के पुत्रों ने हमारे पितामह पाण्डवों को इस तरह कपट के जुए में हराकर, कठोर वचनों से निन्दा करके, जब शत्रुता पैदा कर ली, तब पाण्डवों ने क्या किया? इन्द्र के समान ऐश्वर्यशाली पाण्डव अकस्मात् ऐश्वर्य से भ्रष्ट और दारुण दुर्दशा को पहुंच कर, किस तरह वन में विचरे? महात्मा पाण्डवों के साथ वन में कौन-कौन गया? वहां उन्होंने क्या क्या काम किये, कहां-कहां रहे और क्या क्या खाते-पीते रहे? ॥१।४॥

हे महाराज! उन्होंने किस तरह वन में बारह वर्ष बिताये? श्रेष्ठ, पतिव्रता, सत्यवादिनी, राजपुत्री द्रौपदी ने, सर्वथा सुख के योग्य होकर भी, किस

व्यतीयुर्ब्राह्मणश्रेष्ठ ! शूराणामरिघातिनाम् ॥ ५ ॥
कथं च राजपुत्री सा प्रवरा सर्वयोषिताम् ।
पतिव्रता महाभागा द्रौपदी सत्यवादिनी ॥ ६ ॥
वनवासमदुःखार्हा दारुणं प्रत्यपद्यत ।
एतदाचक्ष्व मे सर्वं विस्तरेण तपोधन ! ॥ ७ ॥
श्रोतुमिच्छामि चरितं भूरिद्रविणतेजसाम् ।
कथ्यमानं त्वया विप्र परं कौतूहलं हि मे ॥ ८ ॥
वैशम्पायन उवाच—एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः ।
धार्तराष्ट्रैः सहामात्यैर्निर्ययुर्गजसाह्वयात् ॥ ९ ॥
वर्धमानपुरद्वारेणाऽभिनिष्क्रम्य पाण्डवाः ।
उदङ्मुखाः शस्त्रभृतः प्रययुः सह कृष्णया ॥ १० ॥
इन्द्रसेनादयश्चैव भृत्याः परिचतुर्दश ।
रथैरनुययुः शीघ्रैः स्त्रिय आदाय सर्वशः ॥ ११ ॥
व्रजतस्तान्विदित्वा तु पौराः शोकाभिपीडिताः ।
गर्हयन्तोऽसकृद्भीष्मविदुरद्रोणगौतमान् ॥ १२ ॥
ऊचुर्विगतसंत्रासाः समागम्य परस्परम् ।
पौरा ऊचु.—नेदमस्ति कुलं सर्वं न वयं न च नो गृहाः ।

तरह वनवास के दारुण दु.ख सहे ? आप यह सब विस्तारपूर्वक कहिए। उन पराक्रमी पाण्डवों का चरित्र सुनने के लिये मुझे बड़ा कौतूहल हो रहा है ॥५।८॥

वैशम्पायन जी ने कहा–हे राजा जनमेजय ! दुर्योधन और उसके मन्त्रियों से कुपित किये हुए पाण्डव जुए में हारकर, अपने शस्त्र लिये हुए, द्रौपदी-सहित हस्तिनापुर के बाहर निकलकर, उत्तर दिशा की ओर चल दिये। इन्द्रसेन आदि चौदह सेवक अपनी-अपनी स्त्रियों-सहित रथों पर चढ़कर शीघ्र उनके पीछे-पीछे हो लिये ॥९।११॥

पाण्डवों के वन जाने का समाचार सुनकर नगर के रहने वाले लोग शोक से दुःखी हो गये। वे सब मिलकर निर्भय होकर भीष्म, द्रोणाचार्य, कृपाचार्य आदि को बार-बार दोष देते हुए कहने लगे, कि दुष्ट दुर्योधन ने शकुनि की सम्मति और कर्ण तथा दुःशासन की सहायता से राज्य के लोभ में पड़कर, हम लोगों का सत्यानाश कर डाला। जिस देश का राज्य यह लोभी, अभिमानी, नीच और निर्दयी दुर्योधन, जो गुरुजन से द्वेष रखनेवाला और सुहृद और आचार विचार को त्यागनेवाला है, शकुनि, कर्ण और दुःशासन आदि अपने पापी

यत्र दुर्योधनः पापः सौबलेयेन पालितः ॥ १३ ॥
कर्णदुःशासनाभ्यां च राज्यमेतच्चिकीर्षति ॥ १४ ॥
न तत्कुलं न चाऽऽचारो न धर्मोऽर्थः कुतः सुखम् ।
यत्र पापसहायोऽयं पापो राज्यं चिकीर्षति ॥ १५ ॥
दुर्योधनो गुरुद्वेषी त्यक्ताचार-सुहृज्जनः ।
अर्थलुब्धोऽभिमानी च नीचः प्रकृतिनिर्घृणः ॥ १६ ॥
नेयमस्ति मही कृत्स्ना यत्र दुर्योधनो नृपः ।
साधु गच्छामहे सर्वे यत्र गच्छन्ति पाण्डवाः ॥ १७ ॥
सानुक्रोशा महात्मानो विजितेन्द्रियशात्रवः ।
ह्रीमन्तः कीर्तिमन्तश्च धर्माचारपरायणाः ॥ १८ ॥
वैशम्पायन उवाच–एवमुक्त्वाऽनुजग्मुस्ते पाण्डवांस्तान्समेत्य च ।
ऊचुः प्राञ्जलयः सर्वे तान्कुन्तीमाद्रिनन्दनान् ॥ १९ ॥
क्व गमिष्यथ भद्रं वस्त्यक्त्वाऽस्मान्दुःखभागिनः ।
वयमप्यनुयास्यामो यत्र यूयं गमिष्यथ ॥ २० ॥
अधर्मेण जिताञ्छ्रुत्वा युष्मांस्त्यक्तघृणैः परैः ।
उद्विग्नाः स्मो भृशं सर्वे नाऽस्मान्हातुमिहाऽर्हथ ॥ २१ ॥
भक्तानुरक्तान्सुहृदः सदा प्रियहिते रतान् ।
कुराजाधिष्ठिते राज्ये न विनश्येम सर्वशः ॥ २२ ॥

साथियों से रक्षित होकर करना चाहता है। उस देश में धर्म के नाश होने से हम लोगों को सुख क्योंकर मिल सकता है। यह कौरवों का कुल भी नष्ट होगा। इससे यह सब से अच्छा है, कि हम लोग भी इस के राज्य को छोड़ कर उन पाण्डवों के साथ चले चलें, जो दयावान्, उदार, शत्रु और इन्द्रियों को जीतनेवाले, कीर्तिमान् और धर्मात्मा हैं ॥१२।१८॥

वैशम्पायन ने कहा–हे राजा जनमेजय! इस प्रकार सम्मति करके सब पुरवासी पाण्डवों के पास पहुंचे और हाथ जोड़कर उनसे कहने लगे–आपका कल्याण हो। हम सब दुःखियाओं को छोड़कर आप लोग कहां जाते हैं? हम सब भी आप ही के साथ चलेंगे। हम लोग यह सुनकर, कि आपको निर्दयी शत्रुओं ने अधर्म से जीत लिया है, महादुःखी हैं। आप को हम लोगों को छोड़ना उचित नहीं है। हम आपके बड़े ही भक्त और भलाई चाहने-वाले हैं। इसलिये आप हमें इस उच्छृङ्खल, अधर्मी, पापबुद्धि, दुराचारी दुर्योधन के हाथ में न सौंपियेगा। जो आप ऐसा करेंगे, तो जड़ मूल से हमारा नाश हो जायगा। हे पाण्डवो! अच्छी और बुरी सङ्गति

ते चाप्यस्मान्नोद्धरेयुः समूलांस्तत्त्वं ब्रूयाः साधु कार्याणि वेत्सि ॥ ३ ॥

विदुर उवाच–त्रिवर्गोऽयं धर्ममूलो नरेन्द्र ! राज्यं चेदं धर्ममूलं वदन्ति ।
धर्मे राजन्वर्तमानः स्वशक्त्या पुत्रान्सर्वान्पाहि पाण्डोः सुतांश्च ॥ ४ ॥
स वै धर्मो विप्रलब्धः सभायां पापात्मभिः सौबलेयप्रधानैः ।
आहूय कुन्तीसुतमक्षवत्यां पराजैषीत्सत्यसन्धं सुतस्ते ॥ ५ ॥
एतस्य ते दुष्प्रणीतस्य राजञ्छेषस्याहं परिपश्याम्युपायम् ।
यथा पुत्रस्तव कौरव्य ! पापान्मुक्तो लोके प्रतितिष्ठेत साधु ॥ ६ ॥
तद्वै सर्वं पाण्डुपुत्रा लभन्तां यत्तद्राजन्नभिसृष्टं त्वयासीत् ।
एष धर्मः परमो यत्स्वकेन राजा तुष्येन्न परस्वेषु गृध्येत् ॥ ७ ॥
यशो न नश्येज्ज्ञातिभेदश्च न स्याद्धर्मो न स्यान्नैव चैवं कृते त्वाम् ।
एतत्कार्यं तव सर्वप्रधानं तेषां तुष्टिः शकुनेश्चाऽवमानः ।
एवं शेषं यदि पुत्रेषु ते स्यादेतद्राजंस्त्वरमाणः कुरुष्व ।
तथैतदेवं न करोषि राजन्ध्रुवं कुरूणां भविता विनाशः ॥ ९ ॥
न हि क्रुद्धो भीमसेनोऽर्जुनो वा शेषं कुर्याच्छात्रवाणामनीके ।
येषां योद्धा सव्यसाची कृतास्त्रो धनुर्येषां गाण्डिवं लोकसारम् ॥ १० ॥
येषां भीमो बाहुशाली च योद्धा तेषां लोके किंनु न प्राप्यमस्ति ।

प्रीति करने लगें और हमारी जड़ को न काटें, सो तुम हमसे कहो । कर्त्तव्य के बारे में तुम विशेष रूप से जानकार हो ॥१।३॥

यह सुनकर विदुर ने कहा, कि धर्म-अर्थ-काम और राज्य इन सब का मूल धर्म है । इससे आपको अपने और पाण्डु के पुत्रों की रक्षा धर्म-पूर्वक करनी चाहिये । उस धर्म को शकुनि आदि पापात्माओं ने सभा में अधर्म रूप कर दिया, जो सत्य-प्रतिज्ञ युधिष्ठिर को बुला कर छल से जुए में जीत लिया। मेरी समझ में युधिष्ठिर के इस अपमान को शान्त करने के लिए यह उपाय आता है, कि आप सब जीते हुए धन को पाण्डवों को दे दीजिए, क्योंकि दूसरे के धन का लोभ न करके अपने धन से सन्तुष्ट रहना बड़ा धर्म है ॥४।७॥

ऐसा करने से आपको केवल धर्म ही होगा, आपका यश न मिटेगा और स्वजातियों में फूट न होगी, पाण्डव इस बात से प्रसन्न हो जायेंगे और शकुनि का अपमान होगा । यह काम सब से श्रेष्ठ है, इसके करने से आप के सब पुत्र बचे रहेंगे, नहीं तो सब कौरव कुल का नाश हो जायगा । भीमसेन और अर्जुन के क्रोध करने पर क्षत्रियों की सेना नहीं बच सकती है । अस्त्रज्ञ अर्जुन और बाहुबलशाली भीमसेन जिस पक्ष के योद्धा हैं, जगत् प्रसिद्ध गाण्डीव जिनका धनुष है, उनके लिये

उक्तं पूर्वं जातमात्रे सुते ते मया यत्ते हितमासीत्तदानीम् ॥ ११ ॥
पुत्रं त्यजेममहितं कुलस्य हितं परं न च तत्त्वं चकर्थ ।
इदं च राजन्हितमुक्तं न चेत्त्वमेवं कर्ता परितप्तासि पश्चात् ॥ १२ ॥
यद्येतदेवमनुमन्ता सुतस्ते संप्रीयमाणः पाण्डवैरेकराज्यम् ।
तापो न ते भविता प्रीतियोगान्न चेन्निगृह्णीष्व सुतं सुखाय ॥ १३ ॥
दुर्योधनं त्वहितं वै निगृह्य पाण्डोः पुत्रं प्रकुरुष्वाधिपत्ये ।
अजातशत्रुर्हि विमुक्तरागो धर्मेणेमां पृथिवीं शास्तु राजन् ! ॥ १४ ॥
ततो राजन् ! पार्थिवाः सर्व एव वैश्या इवास्मानुपतिष्ठन्तु सद्यः ।
दुर्योधनः शकुनिः सूतपुत्रः प्रीत्या राजन् ! पाण्डुपुत्रान्भजन्तु ॥ १५ ॥
दुःशासनो याचतु भीमसेनं सभामध्ये द्रुपदस्यात्मजां च ।
युधिष्ठिरं त्वं परिसान्त्वयस्व राज्ये चैनं स्थापयस्वाभिपूज्य ।
त्वया पृष्टः किमहमन्यद्वदेयमेतत्कृत्वा कृतकृत्योऽसि राजन् ! ॥ १६ ॥
धृतराष्ट्र उवाच श्रुतं वाक्यं विदुर ! यत्ते सभायामिह प्रोक्तं पाण्डवान्प्राप्य मां च ।
हितं तेषामहितं मामकानामेतत्सर्वं मम नावैति चेतः ॥ १७ ॥
इदं त्विदानीं कुत एव निश्चितं तेषामर्थे पाण्डवानां यदात्थ ।
तेनाद्य मन्ये नासि हितो ममेति कथं हि पुत्रं पाण्डवार्थे त्यजेयम् ॥ १८ ॥

---

संसार में असाध्य कुछ नहीं। पहले दुर्योधन के पैदा होते ही मैंने आप से जो कहा था, उसे उसी समय कर डालना अच्छा था। मैंने उसका त्याग करने के लिये कहा था; किन्तु आपने वह नहीं किया। इस समय भी मैंने आपको यह हित का उपदेश किया है। इसके अनुसार काम करने से अन्त को किसी तरह का सन्ताप होने की आशङ्का नहीं है ॥८।१२॥

जो आप का पुत्र सन्तुष्ट होकर, पाण्डवों से मिलकर, एक साथ राज्य भोग करने में सहमत हो, तो आपके लिये सब तरह मङ्गल है, नहीं तो उसे गृहण अर्थात् कैद करके कुरुवंश का भला कीजिए। दुर्योधन को कैद करके पाण्डवों को राज्य देने से अवश्य ही सन्तुष्ट हो कर युधिष्ठिर धर्म के अनुसार पृथ्वी का शासन करेंगे। ऐसा होने से सब राजा लोग बनियों की तरह हमारी सेवा करेंगे। इसलिए दुर्योधन, कर्ण, और शकुनि पाण्डवों की शरण में जायें। आप का पुत्र दुःशासन, अपने कुकर्म के प्रायश्चित्त के तौर पर, भरी सभा में द्रौपदी और भीमसेन से, क्षमा की प्रार्थना करे। आप दुःख को मीठी बातों से शान्त करके युधिष्ठिर को राज तिलक दे दीजिए। ऐसा करने से आप कृतकृत्य हो जायेंगे। जो कुछ आपने हित की बात पूछी वह मैंने कह सुनाई। अब जो कुछ आप और पूछें

असंशयं तेऽपि ममैव पुत्रा दुर्योधनस्तु मम देहात्प्रसूतः ।
स्वं वै देहं परहेतोस्त्यजेति को नु ब्रूयात्समतामन्ववेक्ष्य ॥ १९ ॥
स मां जिह्मं विदुर! सर्वं ब्रवीषि मानं च तेऽहमधिकं धारयामि।
यथेच्छकं गच्छ वा तिष्ठ वा त्वं सुसान्त्व्यमानाप्यसती स्त्री जहाति ॥२०॥
वैशम्पायन उवाच एतावदुक्त्वा धृतराष्ट्रोऽन्वपद्यदन्तर्वेश्म सहसोत्थाय राजन्!
नेदमस्तीत्यथ विदुरो भाषमाणः संप्राद्रवद्यत्र पार्था बभूवुः ॥ २१ ॥
इति श्रीमन्महाभारते वनपर्वणि आरण्यकपर्वणि विदुरवाक्यप्रत्याख्याने चतुर्थोऽध्यायः ॥ ४ ॥

यह कहूँ ॥१३।१७॥

यह सुनकर धृतराष्ट्र ने कहा—हे विदुर! तुमने जब सभा में हम दोनों के सामने ऐसा कहा था, तब तुम्हारा कहना पाण्डवों के लिये हितकर और हमारे लिये अनिष्टकारी, मुझे नहीं जान पड़ा था; किन्तु आज मैं निश्चितरूप से समझ गया, कि तुम पाण्डवों का बड़ा पक्ष करते हो। हमारी भलाई पर तुम्हें तनिक भी ध्यान नहीं है। जो हो, धर्म के अनुसार पाण्डव मेरे पुत्र है सही; किन्तु दुर्योधन मेरे शरीर से उत्पन्न हुआ है। इस कारण पाण्डवों के उपकार के लिये मैं अपने पुत्र को किस तरह छोड़ सकता हूँ! हे विदुर! दूसरों के लिये ऐसा उपदेश करना बुद्धिमान् का काम नहीं। मैं तुम्हारा यथोचित सम्मान करता हूँ, किन्तु तुम मुझे बुरी सम्मति देकर, मेरे बुरे का उपाय करते हो। इस कारण तुम चाहे यहां रहो, चाहे और कहीं चले जाओ, उससे मैं अपनी कुछ हानि नहीं समझता। जो स्त्री बुरे चलन की होती है, वह बहुत समझाने पर भी अपने पति को छोड़ देती है। वैशम्पायन ने कहा—हे राजा जनमेजय! धृतराष्ट्र उक्त प्रकार से कहकर उठ खड़े हुए, और महल के भीतर चले गये। विदुर जी भी यह सोचते हुए कि इनका नाश होने को है, पाण्डवों के पास जाने को चल दिये ॥१८।२१॥

वनपर्व का चौथा अध्याय समाप्त हुआ ॥ ४ ॥

अथ पञ्चमोऽध्यायः ॥ ५ ॥

वैशम्पायन उवाच-पाण्डवास्तु वने वासमुद्दिश्य भरतर्षभाः ।
प्रययुर्जाह्नवीकूलात्कुरुक्षेत्रं सहानुगाः ॥ १ ॥
सरस्वतीदृषद्वत्यौयमुनां च निषेव्य ते ।

पांचवां अध्याय ॥ ५ ॥

वैशम्पायन ने कहा—हे राजा जनमेजय! पाण्डव लोग काम्यक वन को जाने के लिये अनुचरों के साथ गंगातट से चलकर कुरुक्षेत्र में पहुँचे। यमुना, सरस्वती और दृषद्वती (घग्घर) नाम की नदियों में स्नान करके, पश्चिमाभिमुख हो, वे एक वन से दूसरे वन में पहुँचने लगे। इस तरह अनेक वनों को लाँघते हुए वे सरस्वती के तट पर स्थित मरु-स्थली में पहुँचे। वहां पर उन्होंने काम्यक वन को

यमुनेनैव वनं सततं पश्चिमां दिशम् ॥ २ ॥
ततः सरस्वतीकूले समेषु मरुधन्वसु ।
काम्यकं नाम ददृशुर्वनं मुनिजनप्रियम् ॥ ३ ॥
तत्र ते न्यवसन्वीरा वने बहुमृगद्विजे ।
अन्वास्यमाना मुनिभिः सान्त्व्यमानाश्च भारत ! ॥ ४ ॥
विदुरस्त्वपि पाण्डूनां सदा दर्शनलालसः ।
जगामैकरथेनैव काम्यकं वनमृद्धिमत् ॥ ५ ॥
ततो गत्वा विदुरः काम्यकं तच्छीघ्रैरश्वैर्वाहिना स्यन्दनेन ।
ददर्शासीनं धर्मात्मानं विविक्ते सार्धं द्रौपद्या भ्रातृभिर्ब्राह्मणैश्च ॥ ६ ॥
ततोऽपश्यद्विदुरं तूर्णमाराद्भ्यायान्तं सत्यसन्धः स राजा ।
अथाब्रवीद्भ्रातरं भीमसेनं किं नु क्षत्ता वक्ष्यति नः समेत्य ॥ ७ ॥
कच्चिन्नायं वचनात्सौबलस्य समाह्वाता देवनायोपयातः ।
कच्चित्क्षुद्रः शकुनिर्नायुधानि जेष्यत्यस्मान्पुनरेवाक्षवत्याम् ॥ ८ ॥
समाहूतः केनचिदाद्रवेति नाहं शक्तो भीमसेनापयातुम् ।
गाण्डीवे च संशयिते कथं नु राज्यप्राप्तिः संशयिता भवेन्नः ॥ ९ ॥
वैशम्पायन उवाच—तत उत्थाय विदुरं पाण्डवेयाः प्रत्यगृह्णन्नृपते ! सर्व एव ।
तैः सत्कृतः स च तानाजमीढो यथोचितं पाण्डुपुत्रान्समेयात् ॥ १० ॥

देखा जिसमें बहुत से मुनि लोग रहते थे। इसके पश्चात् मृगों और पक्षियों से भरे हुए उस रमणीय वन में रहने का निश्चय करके पाण्डव वहीं रहने लगे। मुनि लोग उनको सान्त्वना देने लगे ॥१।४॥

इसी समय पाण्डवों से मिलने की इच्छा रखनेवाले विदुर जी, शीघ्रगामी घोड़े जिसमें जुते हुए थे, उस रथ पर सवार हो कर समृद्धियुक्त काम्यक वन में पहुँचे। उन्होंने वहां पहुँच कर देखा, कि द्रौपदी, चारों भाइयों और ब्राह्मणों के बीच में धर्मराज बैठे हुए हैं। सत्यसन्ध युधिष्ठिर ने दूर से ही विदुर को रथ पर शीघ्र आते हुए देखकर, भीमसेन से कहा—हे भाई ! न जाने विदुर जी यहां आकर हमसे क्या कहेंगे। ये क्या शकुनि के कहने से फिर हमें जुआ खेलने को बुलाने आ रहे हैं ? दुरात्मा शकुनि क्या हमारे अस्त्र-शस्त्रों को भी जीत लेने की इच्छा रखता है ? अब हमें फिर चलना ही पड़ेगा, क्योंकि मैं बुलाये जाने पर रुक नहीं सकता हूँ। जो हो, यदि गाण्डीव धनुष हमारे हाथ से जाता रहा, तो राज्य की प्राप्ति हमारे लिये असम्भव हो जायगी ॥५।९॥

वैशम्पायन कहते हैं—हे राजा जनमेजय ! अब सब पाण्डव लोग आदर का भाव दिखलाते हुए

समाश्वस्तं विदुरं ते नरर्षभास्ततोऽपृच्छन्नागमनाय हेतुम् ।
स चापि तेभ्यो विस्तरतः शशंस यथावृत्तो धृतराष्ट्रोऽम्बिकेयः ॥ ११ ॥
विदुर उवाच—अवोचन्मां धृतराष्ट्रोऽनुगुप्तमजातशत्रो! परिगृह्याभिपूज्य ।
एवं गते समतामभ्युपेत्य पथ्यं तेषां मम चैव ब्रवीहि ॥ १२ ॥
मयाऽप्युक्तं यत्क्षमं कौरवाणां हितं पथ्यं धृतराष्ट्रस्य चैव ।
तद्वै तस्मै न रुचामभ्युपैति ततश्चाहं क्षममन्यन्न मन्ये ॥ १३ ॥
परं श्रेयः पाण्डवेया! मयोक्तं न मे तच्च श्रुतवानाम्बिकेयः ।
यथातुरस्येव हि पथ्यमन्नं न रोचते स्मास्य तदुच्यमानम् ॥ १४ ॥
न श्रेयसे नीयतेऽजातशत्रो! स्त्री श्रोत्रियस्येव गृहे प्रदुष्टा ।
ध्रुवं न रोचेद्भरतर्षभस्य पतिः कुमार्या इव षष्टिवर्षः ॥ १५ ॥
ध्रुवं विनाशो नृप कौरवाणां न वै श्रेयो धृतराष्ट्रः परैति ।
यथा च पर्णे पुष्करस्यावसिक्तं जलं न तिष्ठेत्पथ्यमुक्तं तथास्मिन् ॥ १६ ॥
ततः क्रुद्धो धृतराष्ट्रोऽब्रवीन्मां यस्मिञ्छ्रद्धा भारत तत्र याहि ।
नाहं भूयः कामये त्वां सहायं महीमिमां पालयितुं पुरं वा ॥ १७ ॥

---

उठ खड़े हुए। स्वागत सम्भाषण आदि के द्वारा उन्होंने विदुर जी का यथोचित सम्मान किया और उन्हें सुन्दर आसन पर बिठाया। इसके पीछे जब विदुर जी विश्राम कर चुके, तब युधिष्ठिर ने उनसे आने का कारण पूछा। अब विदुर जी विस्तार के साथ धृतराष्ट्र का आचार सुनाने लगे ॥१०।११॥

विदुर ने कहा—हे युधिष्ठिर! राजा धृतराष्ट्र ने एकान्त में बुलाकर मुझ से कहा कि हे विदुर! जो होना था, सो हो गया। बतलाओ, अब इस अवस्था में क्या किया जावे, जिससे हमारे और पाण्डु के पुत्रों का कल्याण हो। मैंने उन्हें उनके और सब कौरवों के हित की बात कही; किन्तु मेरे उपदेश के वाक्य उन्हें बिल्कुल ही नहीं रुचे। हितकारी होने पर भी मेरा उपदेश उनको इस प्रकार से नहीं रुचा जैसे रोगी को पथ्य का अन्न नहीं अच्छा लगता। हे युधिष्ठिर! श्रोत्रिय ब्राह्मण के घर रहने वाली बुरे चरित्र की स्त्री जैसे कुल के लिये कलङ्क रूप होती है, वैसे ही अम्बिका के पुत्र धृतराष्ट्र भरत-वंश के नाश का कारण होंगे। नवयुवती स्त्री जैसे वृद्ध पति की चाह नहीं करती, वैसे ही मेरे वचनों पर धृतराष्ट्र की श्रद्धा नहीं हुई। कमल के पत्ते पर पड़े हुए जल बिन्दु की तरह मेरे उपदेश के वचन धृतराष्ट्र के हृदय में नहीं ठहरे, इससे स्पष्ट जान पड़ता है, कि यह भरतवंश बहुत शीघ्र निर्मूल हो जायगा ॥१२।१६॥

मेरे उपदेश के अनुसार कार्य करना तो दूर रहा, धृतराष्ट्र ने 'दूर हो' कह कर मुझे अपने यहां से निकाल दिया है। उन्होंने क्रोध करके मुझसे

सोऽहं त्यक्तो धृतराष्ट्रेण राज्ञा प्रशासितुं त्वामुपयातो नरेन्द्र ! ।
तद्वै सर्वं यन्मयोक्तं सभायां तद्धार्यतां यत्प्रवक्ष्यामि भूयः ॥ १८ ॥
क्लेशैस्तीव्रैर्युज्यमानः सपत्नैः क्षमां कुर्वन्कालमुपासते यः ।
संवर्धयन्स्तोकमिवाग्निमात्मवान्स वै भुङ्क्ते पृथिवीमेक एव ॥ १९ ॥
यस्याऽविभक्तं वसु राजन्सहायैस्तस्य दुःखेऽप्यंशभाजः सहायाः ।
सहायानामेष संग्रहणेऽभ्युपायः सहायाप्तौ पृथिवीप्राप्तिमाहुः ॥ २० ॥
सत्यं श्रेष्ठं पाण्डव! विप्रलापं तुल्यं चान्नं सह भोज्यं सहायैः।
आत्मा चैषामग्रतो न स्म पूज्य एवंवृत्तिर्वर्धते भूमिपालः ॥ २१ ॥
युधिष्ठिर उवाच–एवं करिष्यामि यथा ब्रवीषि परां बुद्धिमुपगम्याप्रमत्तः।
यच्चाप्यन्यद्देशकालोपपन्नं तद्वै वाच्यं तत्करिष्यामि कृत्स्नम् ॥ २२ ॥

इति श्रीमन्महाभारते सभापर्वणि आरण्यकपर्वणि विदुरनिर्वासे पञ्चमोऽध्यायः ॥ ५ ॥

कहा–मैं पृथ्वी के शासन या प्रजा के पालन के बारे में अब तुम्हारी सम्मति नहीं सुनूँगा। सो हे युधिष्ठिर! मैं धृतराष्ट्र से त्यागे जाने के कारण मे तुमको शिक्षा करने के लिये आया हूँ। तुम को चाहिए, कि जो मैंने तुम्हें सभा में उपदेश दिया था और अब जो कुछ कहूँ, उसके अनुसार चलो। जो मनुष्य शत्रु के क्लेश से दुःखी होने पर क्षमापूर्वक रहकर समय को देखा करता है, वह इस प्रकार से बढ़कर जैसे थोड़ी भी अग्नि सुलग-सुलग कर सब भस्म कर देती है, धीरे-धीरे बढ़कर अकेला सम्पूर्ण पृथ्वी का राज्य करता है ॥१७।१९॥

सम्पत्ति के समय जो अपने सहायकों के साथ समान रूप से सम्पत्ति का भोग करता है, उसे विपत्ति के समय सब क्लेश अकेले नहीं सहने पड़ते। सहायक पाने का यही उपाय है। और सहायक मिल गया तो सब कुछ मिल गया। इसलिये सहायकों को समान रूप से सम्पत्ति बाँट कर उस का उपभोग करना ही अच्छा है। उनके आगे अपने मुख अपनी बड़ाई न करनी चाहिये। ऐसा व्यवहार करने से राजाओं की वृद्धि होती है। यह सुनकर युधिष्ठिर ने कहा–हे विदुर जी! मैं बड़े यत्न और परिश्रम के साथ आप का कहा करूँगा। इस समय देश-काल के अनुकूल जो कुछ उत्तम उपदेश आप देना चाहें, वह दें। मैं उसे मानने और करने को प्रस्तुत हूँ ॥२०।२२॥

—.*—

वनपर्व का पांचवां अध्याय समाप्त हुआ ॥ ५ ॥

अथ षष्ठोऽध्यायः ॥ ६ ॥

वैशम्पायन उवाच–गते तु विदुरे राजन्नाश्रमं पाण्डवान्प्रति ।
धृतराष्ट्रो महाप्राज्ञः पर्यतप्यत भारत ! ॥ १ ॥

विदुरस्य प्रभावं च सन्धिविग्रहकारितम् ।
विवृद्धिं च परां मत्वा पाण्डवानां भविष्यति ॥ २ ॥
स सभाद्वारमागम्य विदुरस्मारमोहितः ।
समक्षं पार्थिवेन्द्राणां पपाताविष्टचेतनः ॥ ३ ॥
स तु लब्ध्वा पुनः संज्ञां समुत्थाय महीतलात् ।
समीपोपस्थितं राजा सञ्जयं वाक्यमब्रवीत् ॥ ४ ॥
भ्राता मम सुहृच्चैव साक्षाद्धर्म इवापरः ।
तस्य स्मृत्वाऽद्य सुभृशं हृदयं दीर्यतीव मे ॥ ५ ॥
तमानयस्व धर्मज्ञं मम भ्रातरमाशु वै ।
इति ब्रुवन्स नृपतिः कृपणं पर्यदेवयत् ॥ ६ ॥
पश्चात्तापाऽभिसंतप्तो विदुरस्मारमोहितः ।
भ्रातृस्नेहादिदं राजा सञ्जयं वाक्यमब्रवीत् ॥ ७ ॥
गच्छ सञ्जय ! जानीहि भ्रातरं विदुरं मम ।
यदि जीवति रोषेण मया पापेन निर्धुतः ॥ ८ ॥
न हि तेन मम भ्रात्रा सुसूक्ष्ममपि किंचन ।
व्यलीकं कृतपूर्वं वै प्राज्ञेनाऽमितबुद्धिना ॥ ९ ॥

छठवां अध्याय ॥ ६ ॥

वैशम्पायन ने कहा—हे राजा जनमेजय ! विदुर जी के पाण्डवों के पास चले जाने पर, उस ज्ञानी राजा धृतराष्ट्र को बड़ा दुःख हुआ। और वह विदुर जी के प्रभाव और संधि और विग्रह आदि नीति की निपुणता पाण्डवों का भविष्यकाल में उदय जानकर, महादुःखी होकर, सभा के द्वार पर निकल आये और यह समझ कर, कि मैंने विदुर जी के साथ वृथा द्वेष किया और मूर्च्छित होकर, सब राजाओं के सामने पृथ्वी पर गिर पड़े। कुछ देर के पश्चात् होश आई और वे उठ बैठे। सञ्जय को अपने पास पाकर धृतराष्ट्र कहने लगे—हे सञ्जय ! मैं अपने भाई विदुर को, जो साक्षात् दूसरे धर्मराज के समान है, याद कर-करके महादुःखी हो रहा हूँ। उनके वियोग से मेरा हृदय फटा जा रहा है ॥१।५॥

इसलिये तुम मेरे भाई, धर्म के ज्ञाता विदुर को तुरन्त यहा ले आओ। यह कहकर धृतराष्ट्र विलाप करने लगे और पछतावा कर-करके अपने द्वेष को याद करके भाई के स्नेह की फांसी में बँधे हुए, सञ्जय से फिर कहने लगे—हे सञ्जय ! तुम जाकर मेरे भाई विदुर को ढूंढो। मुझ पापी ने क्रोध में उसे निकाल दिया है। देखो वह जीता है, या नहीं ! मेरे

स व्यलीकं परं प्राप्तो मत्तः परमबुद्धिमान् ।
त्यक्ष्यामि जीवितं प्राज्ञ ! तं गच्छानय सञ्जय ! ॥ १० ॥
तस्य तद्वचनं श्रुत्वा राज्ञस्तमनुमान्य च ।
सञ्जयो बाढमित्युक्त्वा प्राद्रवत्काम्यकं प्रति ॥ ११ ॥
सोऽचिरेण समासाद्य तद्वनं यत्र पाण्डवाः ।
रौरवाजिनसंवीतं ददर्शाथ युधिष्ठिरम् ॥ १२ ॥
विदुरेण सहासीनं ब्राह्मणैश्च सहस्रशः ।
भ्रातृभिश्चाऽभिसंगुप्तं देवैरिव पुरन्दरम् ॥ १३ ॥
युधिष्ठिरमुपागम्य पूजयामास सञ्जयः ।
भीमार्जुनयमांश्चापि तद्युक्तं प्रतिपेदिरे ॥ १४ ॥
राज्ञा पृष्टः स कुशलं सुखासीनश्च सञ्जयः ।
शशंसागमने हेतुमिदं चैवाऽब्रवीद्वचः ॥ १५ ॥
सञ्जय उवाच—राजा स्मरति ते क्षत्तर्धृतराष्ट्रोऽम्बिकासुतः ।
तं पश्य गत्वा त्वं क्षिप्रं सञ्जीवय च पार्थिवम् ॥ १६ ॥
सोऽनुमान्य नरश्रेष्ठान्पाण्डवान्कुरुनन्दनान् ।
नियोगाद्राजसिंहस्य गन्तुमर्हसि सत्तम ! ॥ १७ ॥
वैशम्पायन उवाच-एवमुक्तस्तु विदुरो धीमान्स्वजनवत्सलः ।

भाई विदुर ने, जो बड़ा बुद्धिमान् और ज्ञानी है, मेरा किसी समय में थोड़ा सा भी अप्रिय नहीं किया। हाय, मैंने उसका बड़ा भारी अपमान किया है। हे सञ्जय ! तुम शीघ्र विदुर को ढूँढकर यहां ले आओ; नहीं तो मैं अपने प्राण दे दूँगा ॥६।१०॥

यह सुनकर सञ्जय वहां से धृतराष्ट्र को प्रणाम करके 'बहुत अच्छा' कहकर काम्यक वन को चल दिया। और थोड़े ही समय में पाण्डवों के आश्रम में पहुंचकर उसने देखा, कि मृगचर्म ओढ़े हुए युधिष्ठिर, देवताओं की मण्डली में इन्द्र के समान, विदुर-समेत हजारों ब्राह्मणों और चारों भाइयों के बीच में शोभायमान हैं। सञ्जय ने पहले युधिष्ठिर को प्रणाम किया। फिर भीम, अर्जुन, नकुल और सहदेव को प्रणाम करके वह आसन पर बैठ गया ॥११।१४॥

इसके पीछे संजय युधिष्ठिर के कुशल पूछने पर, अपने आने का कारण कहकर, विदुर जी से कहने लगा–राजा धृतराष्ट्र आपको याद कर रहे हैं। आप शीघ्र जाकर उन्हें दर्शन दीजिए और उनके प्राणों की रक्षा कीजिए। वैशम्पायन ने कहा–हे राजा जनमेजय ! बुद्धिमान् विदुर संजय की उक्त बात को सुनकर धर्मराज की अनुमति से फिर हस्तिनापुर को लौट आये ॥१५।१८॥

युधिष्ठिरस्यानुमते पुनरायाद्गजाह्वयम् ॥ १८ ॥
तमब्रवीन्महातेजा धृतराष्ट्रोऽम्बिकासुतः ।
दिष्ट्या प्राप्तोऽसि धर्मज्ञ ! दिष्ट्या स्मरसि मेऽनघ !॥ १९ ॥
अद्य चाहं दिवा रात्रौ त्वत्कृते भरतर्षभ ! ।
प्रजागरे प्रपश्यामि विचित्रं देहमात्मनः ॥ २० ॥
सोऽङ्कमानीय विदुरं मूर्धन्याघ्राय चैव ह ।
क्षम्यतामिति चोवाच यदुक्तोऽसि मयाऽनघ ! ॥ २१ ॥
विदुर उवाच—क्षान्तमेव मया राजन्गुरुर्मे परमो भवान् ।
एषोऽहमागतः शीघ्रं त्वद्दर्शनपरायणः ॥ २२ ॥
भवन्ति हि नरव्याघ्र ! पुरुषा धर्मचेतसः ।
दीनाभिपातिनो राजन्नात्र कार्या विचारणा ॥ २३ ॥
पाण्डोः सुता यादृशा मे तादृशास्तव भारत ! ।
दीना इतीव मे बुद्धिरभिपन्नाऽद्य तान्प्रति ॥ २४ ॥
वैशम्पायन उवाच—अन्योन्यमनुनीयैवं भ्रातरौ द्वौ महाद्युती ।
विदुरो धृतराष्ट्रश्च लेभाते परमां मुदम् ॥ २५ ॥

इति श्रीमन्महाभारते वनपर्वणि आरण्यकपर्वणि विदुरप्रत्यागमनं नाम षष्ठोऽध्यायः ॥ ६ ॥

महातेजस्वी धृतराष्ट्र ने विदुर को आया हुआ जानकर कहा—हे निष्पाप ! मेरा बड़ा सौभाग्य है जो तुम मुझे याद करके फिर हस्तिनापुर में आ गये। हे भरतश्रेष्ठ ! तुम्हारे शोक में मुझ को रात्रि भर निद्रा नहीं आई। जागते जागते मेरे शरीर का रङ्ग पलट गया है। यह कह कर अब धृतराष्ट्र ने विदुर जी को अपनी गोद में बैठा लिया और फिर उनका माथा सूँघकर वे कहने लगे—हे निष्पाप ! जो कुछ मैंने तुमसे कहा है, उसको क्षमा करो ॥१९।२१॥ यह सुनकर विदुर जी ने कहा—हे महाराज ! मैं सदा ही क्षमायुक्त रहता हूँ। आप तो मेरे परम गुरु हैं। मैं आपके दर्शनों की इच्छा से शीघ्र चला आया हूँ। हे महाराज ! धर्मात्मा लोग सदा दुःखी मनुष्यों का पक्ष लेते हैं, इस में कुछ सन्देह करने की बात नहीं है। निस्सन्देह मेरे लिये जैसे आपके पुत्र हैं, वैसे ही पाण्डव भी हैं, परन्तु पाण्डव दुःखी हैं, इससे मेरा मन उनकी ओर विशेष है। इसके पीछे वैशम्पायन ने कहा—हे राजा जनमेजय ! इसके पीछे वह दोनों भाई परस्पर मिलकर बहुत प्रसन्न हुए ॥ ॥२२।२५॥

वनपर्व का छठा अध्याय समाप्त हुआ ॥ ६ ॥

अथ सप्तमोऽध्यायः ॥ ७ ॥

वैशम्पायन उवाच–श्रुत्वा च विदुरं प्राप्तं राज्ञा च परिसान्त्वितम् ।
धृतराष्ट्रात्मजो राजा पर्यतप्यत दुर्मतिः ॥ १ ॥
स सौबलेयमानाय्य कर्णदुःशासनौ तथा ।
अब्रवीद्वचनं राजा प्रविश्याऽबुद्धिजं तमः ॥ २ ॥
एष प्रत्यागतो मन्त्री धृतराष्ट्रस्य धीमतः ।
विदुरः पाण्डुपुत्राणां सुहृद्विद्वान्हिते रतः ॥ ३ ॥
यावदस्य पुनर्बुद्धिं विदुरो नाऽपकर्षति ।
पाण्डवाऽऽनयने तावन्मन्त्रयध्वं हितं मम ॥ ४ ॥
अथ पश्याम्यहं पार्थान्प्राप्तानिह कथंचन ।
पुनः शोषं गमिष्यामि निरम्बुर्निरवग्रहः ॥ ५ ॥
विषमुद्बन्धनं चैव शस्त्रमग्निप्रवेशनम् ।
करिष्ये न हि तानृद्धान्पुनर्द्रष्टुमिहोत्सहे ॥ ६ ॥
शकुनिरुवाच–किं बालिशमतिं राजन्नास्थितोऽसि विशांपते ! ।
गतास्ते समयं कृत्वा नैतदेवं भविष्यति ॥ ७ ॥
सत्यवाक्ये स्थिताः सर्वे पाण्डवा भरतर्षभ ! ।
पितुस्ते वचनं तात ! न ग्रहीष्यन्ति कर्हिचित् ॥ ८ ॥

सातवाँ अध्याय ॥ ७ ॥

वैशम्पायन कहते हैं–हे राजा जनमेजय ! विदुर जी के लौट आने की और धृतराष्ट्र के द्वारा विदुर को सान्त्वना मिलने की सूचना पाकर, दुर्बुद्धि दुर्योधन को बड़ा दुःख हुआ । अज्ञान के अँधेरे में अन्धा हो रहा दुर्योधन, शकुनि, कर्ण और दुःशासन को बुलाकर उनसे कहने लगा–देखो, राजा धृतराष्ट्र के बुद्धिमान् मन्त्री विदुर फिर आ गये । वे पाण्डवों के सुहृद हैं और सदैव उनके हित में प्रीति रखते हैं । इसलिए विदुर, जब तक पिता जी को पाण्डवों को फिर बुलाने की सलाह नहीं देते, तबतक उससे पहले ही तुम मेरी भलाई का उपाय करो । यदि पाण्डव किसी तरह फिर आ गये, तो मैं फिर दुर्बल और उदास हो जाऊँगा । मैं खाना पीना छोड़ दूँगा । तब मैं विष खा लूँगा, या ग्रीवा में फाँसी लगाकर मर जाऊँगा अथवा आग में जल मरूँगा, किन्तु पाण्डवों की समृद्धि को देख न सकूँगा ॥१।६॥

यह सुनकर शकुनि ने कहा–हे राजन् ! तुम किसलिये मूढ़ पुरुष की तरह चिन्ता कर रहे हो ? पाण्डव तो समय की अवधि करके वन को गये हैं ।

अथवा ते ग्रहीष्यन्ति पुनरेष्यन्ति वा पुरम् ।
निरस्य समयं सर्वे पणोऽस्माकं भविष्यति ॥ ९ ॥
सर्वे भवामो मध्यस्था राज्ञश्छन्दानुवर्तिनः ।
छिद्रं बहु प्रपश्यन्तः पाण्डवानां सुसंवृताः ॥ १० ॥
दुःशासन उवाच—एवमेतन्महाप्राज्ञ ! यथा वदसि मातुल ! ।
नित्यं हि मे कथयतस्तव बुद्धिर्हि रोचते ! ॥ ११ ॥
कर्ण उवाच—काममीक्षामहे सर्वे दुर्योधन ! तवेप्सितम् ।
ऐकमत्यं हि नो राजन्सर्वेषामेव लक्षये ॥ १२ ॥
नागमिष्यन्ति ते धीरा अकृत्वा कालसंविदम् ।
आगमिष्यन्ति चेन्मोहात्पुनर्द्यूतेन ताञ्जय ॥ १३ ॥
वैशम्पायन उवाच—एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा ।
नाऽतिहृष्टमनाः क्षिप्रमभवत्स पराङ्मुखः ॥ १४ ॥
उपलभ्य ततः कर्णो विवृत्य नयने शुभे ।
रोषाद्दुःशासनं चैव सौबलं च तमेव च ॥ १५ ॥
उवाच परमक्रुद्ध उद्यम्यात्मानमात्मना ।
अथो मम मतं यत्तु तन्निबोधत भूमिपाः ! ॥ १६ ॥
प्रियं सर्वे करिष्यामो राज्ञः किंकरपाणयः ।

इसलिए तुम जैसा विचार कर रहे हो, वैसा होना असम्भव है। हे भरतश्रेष्ठ ! पाँचों पाण्डव सत्य-परायण हैं। सत्य को छोड़ कर वे कभी धृतराष्ट्र की बात न मानेंगे; अथवा यदि वे अपनी प्रतिज्ञा छोड़ कर चले भी आवेंगे, तो भी कुछ चिन्ता की बात नहीं है। हम फिर उनको जुए में जीत लेंगे और तुम्हारा हित करने के लिये पाण्डवों के दोषों को देखकर, अपने दृढ़ मंत्र को छिपा कर, धृतराष्ट्र की आज्ञापूर्वक मध्यस्थ हो जायेंगे। यह सुनकर दुःशासन ने कहा—हे मामा जी ! आप बड़े ज्ञानी हैं। आपने ठीक-ठीक कहा है। मुझे आप की बुद्धि सदैव रुचती है ॥७।११॥

इसके पीछे कर्ण ने कहा—हे राजन् ! हम लोग एकमत होकर, सदा तुम्हारा हित सोचा करते है। पाण्डव समय को बिताये बिना कभी नहीं आवेंगे और जो आवेंगे भी, तो उनको हम सब फिर जुए में जीत लेंगे ॥१२।१३॥

वैशम्पायन ने कहा हे राजा जनमेजय ! कर्ण की बात को सुनकर दुर्योधन ने अप्रसन्नता से अपना मुख फेर लिया। यह देखकर कर्ण दुर्योधन के मन की बात को पहिचान गया और क्रोध से नेत्र फाड़ कर शकुनि और दुःशासन से कहने लगा—राजा का

न चाऽस्य शक्नुमः स्थातुं प्रियं सर्वे ह्यतन्द्रिताः ॥ १७ ॥
वयं तु शस्त्राण्यादाय रथानास्थाय दंशिताः ।
गच्छामः सहिता हन्तुं पाण्डवान्वनगोचरान् ॥ १८ ॥
तेषु सर्वेषु शान्तेषु गतेष्वविदितां गतिम् ।
निर्विवादा भविष्यन्ति धार्तराष्ट्रास्तथा वयम् ॥ १९ ॥
यावदेव परिद्यूना यावच्छोकपरायणाः ।
यावन्मित्रविहीनाश्च तावच्छक्या मतं मम ॥ २० ॥
तस्य तद्वचनं श्रुत्वा पूजयन्तः पुनः पुनः ।
बाढमित्येव ते सर्वे प्रत्यूचुः सूतजं तदा ॥ २१ ॥
एवमुक्त्वा सुसंरब्धा रथैः सर्वे पृथक्पृथक् ।
निर्ययुः पाण्डवान्हन्तुं सहिताः कृतनिश्चयाः ॥ २२ ॥
तान्प्रस्थितान्परिज्ञाय कृष्णद्वैपायनः प्रभुः ।
आजगाम विशुद्धात्मा दृष्ट्वा दिव्येन चक्षुषा ॥ २३ ॥
प्रतिषिध्याथ तान्सर्वान्भगवाँल्लोकपूजितः ।
प्रज्ञाचक्षुषमासीनमुवाचाभ्येत्य सत्वरम् ॥ २४ ॥

इति श्रीमन्महाभारते वनपर्वणि आरण्यकपर्वणि व्यासागमने नाम सप्तमोऽध्यायः ॥ ७ ॥

प्रिय करना अनुचरों का प्रधान कर्त्तव्य है । हम लोग दुर्योधन का हित करना चाहते हैं; किन्तु राजा धृतराष्ट्र हम लोगों को रोके हुए है ॥१४।१७॥

इस लिये मेरी समझ में हम सब शस्त्र लिये हुए रथों पर चढ़-चढ़कर, वन को चलें और पाण्डवों को मार डालें, उनके मरने पर ये सब धृतराष्ट्र के पुत्र और हम सब बेखटके हो जायेंगे । क्योंकि जब तक पाण्डव दुःखी और मित्रहीन है, तब तक उनको जीत लेना बड़ी बात नहीं है ॥१८।२०॥

यह सुन करके सब के सब कर्ण की प्रशंसा करने लगे और 'बहुत अच्छा' कहकर, क्रोध कर-करके, अलग-अलग रथों में चढ़-चढ़कर, पाण्डवों को मारने के लिये नगर से बाहर निकले । उन्हें पाण्डवों को मारने के लिये जाते देखकर, लोकपूजित भगवान् वेदव्यास ने, दिव्यदृष्टि से अच्छी तरह सब देख भालकर, रास्ते से ही उन्हें लौटा दिया । इसके पश्चात् वे उस अन्ध राजा धृतराष्ट्र के पास गये और कहने लगे ॥२१।२४॥

वनपर्व का सातवां अध्याय समाप्त हुआ ॥ ७ ॥

अथ अष्टमोऽध्यायः ॥ ८ ॥

व्यास उवाच—धृतराष्ट्र ! महाप्राज्ञ ! निबोध वचनं मम ।
वक्ष्यामि त्वां कौरवाणां सर्वेषां हितमुत्तमम् ॥ १ ॥
न मे प्रियं महाबाहो ! यद्गताः पाण्डवा वनम् ।
निकृत्या निकृताश्चैव दुर्योधनपुरोगमैः ॥ २ ॥
ते स्मरन्तः परिक्लेशान्वर्षे पूर्णे त्रयोदशे ।
विमोक्ष्यन्ति विषं क्रुद्धाः कौरवेयेषु भारत ! ॥ ३ ॥
तदयं किं नु पापात्मा तव पुत्रः सुमन्दधीः ।
पाण्डवान्नित्यसंक्रुद्धो राज्यहेतोर्जिघांसति ॥ ४ ॥
वार्यतां साध्वयं मूढः शमं गच्छतु ते सुतः ।
वनस्थांस्तानयं हन्तुमिच्छन्प्राणान्विमोक्ष्यति ॥ ५ ॥
यथा हि विदुरः प्राज्ञो यथा भीष्मो यथा वयम् ।
यथा कृपश्च द्रोणश्च तथा साधुर्भवानपि ॥ ६ ॥
विग्रहो हि महाप्राज्ञ ! स्वजनेन विगर्हितः ।
अधर्म्यमयशस्यं च मा राजन् ! प्रतिपद्यताम् ॥ ७ ॥
समीक्षा यादृशी ह्यस्य पाण्डवान्प्रति भारत ! ।
उपेक्ष्यमाणा सा राजन् ! महान्तमनयं स्पृशेत् ॥ ८ ॥

आठवा अध्याय ॥ ८ ॥

व्यास जी ने कहा—हे राजा धृतराष्ट्र ! मैं सब कौरवों की भलाई के लिये तुमसे जो कहता हूँ, सो एकचित्त होकर सुनो । दुर्योधन आदि तुम्हारे पुत्रों ने बड़ा भारी छल करके पाण्डवों को वनवास दे दिया है, यह सुनकर मैं अत्यन्त दुःखित हुआ हूँ। हे भरतश्रेष्ठ ! पाण्डव लोग वनवास में रहकर जो क्लेश सह रहे हैं, वह निःसन्देह उन्हें स्मरण रहेगा । तेरह वर्ष व्यतीत होने पर वे अवश्य बदला चुकाने का उपाय करेंगे । अत्यन्त कुबुद्धि पापी दुर्योधन ऐश्वर्य के लोभ से बहुत ही उतावला होकर सदा पाण्डवों के नाश की चेष्टा किया करता है । इस लिये जो तुम पुत्र का भला चाहते हो, तो दुर्बुद्धि दुर्योधन को इस बुरी चेष्टा से रोको । वनवासी पाण्डवों को मारने जाकर वह आप ही अपने प्राण खो बैठेगा ॥१-५॥

हे महाराज ! महाप्राज्ञ विदुर, भीष्म, द्रोणाचार्य, कृपाचार्य आदि हम लोगों के समान तुम भी सज्जन पुरुष हो । हे महाप्राज्ञ ! भाई-बन्धुओं के साथ विरोध करना निन्दित अधर्मरूप और अयश का करनेवाला है । इसलिए उस अधर्मयुक्त काम में

अथवाऽयं सुमन्दात्मा वनं गच्छतु ते सुतः ।
पाण्डवैः सहितो राजन्नेक एवाऽसहायवान् ॥ ९ ॥
ततः संसर्गजः स्नेहः पुत्रस्य तव पाण्डवैः ।
यदि स्यात्कृतकार्योऽद्य भवेस्त्वं मनुजेश्वर ! ॥ १० ॥
अथवा जायमानस्य यच्छीलमनुजायते ।
श्रूयते तन्महाराज ! नामृतस्यापसर्पति ॥ ११ ॥
कथं वा मन्यते भीष्मो द्रोणोऽथ विदुरोऽपि वा ।
भवान्वाऽत्रक्षमं कार्यं पुरा, वोऽर्थो निवर्तते ॥ १२ ॥

इति श्रीमन्महाभारते वनपर्वणि आरण्यकपर्वणि व्यासवाक्यं नाम अष्टमोऽध्यायः ॥ ८ ॥

हाथ न लगाना । हे कौरवो ! पाण्डवों के प्रति इस दुर्योधन की जिस प्रकार की कुबुद्धि है, वह छोड़ देनी चाहिए, नहीं तो बड़ा भारी अनर्थ हो जावेगा। मेरी सम्मति है, कि तुम्हारा दुराचारी पुत्र असहाय होकर पाण्डवों के साथ वन को जावे । यदि पास रहने के कारण, पाण्डवों के लिये उसके हृदय में स्नेह उत्पन्न हो जाय, तो तुम्हें अपने काम में सफलता प्राप्त हो सकती है, अर्थात् तुम्हारे पुत्रों का भला हो सकता है । अथवा जिस मनुष्य का जैसा स्वभाव जन्म के समय होता है, प्राणान्त होने तक नहीं जा सकता। इसलिये वैसा होने की सम्भावना कहा है ? जो हो, भीष्म, द्रोणाचार्य, विदुर और तुम इस विषय में क्या सोचते हो ? तुम लोगों की क्या सम्मति है ? जिससे अन्त में कुछ अनिष्ट न हो, वैसा उचित उपाय करना हम सब का कर्त्तव्य है, नहीं तो तुम्हारी बड़ी हानि होगी ॥६।१२॥

वनपर्व का आठवां अध्याय समाप्त हुआ ॥ ८

अथ नवमोऽध्यायः ॥ ९ ॥

धृतराष्ट्र उवाच—भगवन्नाहमप्येतद्रोचये द्यूतसम्भवम् ।
मन्ये तद्विधिनाऽऽकृष्य कारितोऽस्मीति वै मुने ! ॥ १ ॥
नैतद्रोचयते भीष्मो न द्रोणो विदुरो न च ।
गान्धारी नेच्छति द्यूतं तत्र मोहात्प्रवर्तितम् ॥ २ ॥
परित्यक्तुं न शक्नोमि दुर्योधनमचेतनम् ।

नवमां अध्याय ॥ ९ ॥

व्यास जी की उक्त बात को सुनकर धृतराष्ट्र कहने लगे—हे महाराज ! द्यूतक्रीड़ा के लिये मेरी इच्छा न थी । दैव ही की प्रेरणा से मैंने उसका अनुमोदन कर दिया था । भीष्म, विदुर, द्रोणाचार्य और गान्धारी ने भी उसका विरोध किया था । हे महाराज ! मैं सब दोषों को जानता हूँ, परन्तु क्या

पुत्रस्नेहेन भगवञ्जानन्नपि प्रियव्रत ! ॥ ३ ॥

व्यास उवाच—वैचित्रवीर्य ! नृपते ! सत्यमाह यथा भवान् ।
दृढं विद्मः परं पुत्रं परं पुत्रान्न विद्यते ॥ ४ ॥
इन्द्रोऽप्यश्रुनिपातेन सुरभ्या प्रतिबोधितः ।
अन्यैः समृद्धैरप्यर्थैर्न सुतान्मन्यते परम् ॥ ५ ॥
अत्र ते वर्तयिष्यामि महदाख्यानमुत्तमम् ।
सुरभ्याश्चैव संवादमिन्द्रस्य च विशांपते ! ॥ ६ ॥
त्रिविष्टपगता राजन्सुरभी प्रारुदत्किल ।
गवां माता पुरा तात ! तामिन्द्रोऽन्वकृपायत ॥ ७ ॥

इन्द्र उवाच—किमिदं रोदिषि शुभे ! कच्चित्क्षेमं दिवौकसाम् ।
मनुष्येष्वथ नागेषु नैतदल्पं भविष्यति ॥ ८ ॥

सुरभिरुवाच—विनिपातो न ते कश्चिद्दृश्यते त्रिदशाऽधिप ! ।
अहं तु पुत्रं शोचामि तेन रोदिमि कौशिक ! ॥ ९ ॥
पश्यैनं कर्षकं क्षुद्रं दुर्बलं मम पुत्रकम् ।
प्रतोदेनाभिनिघ्नन्तं लाङ्गलेन च पीडितम् ॥ १० ॥
निषीदमानं सोत्कण्ठं वध्यमानं सुराऽधिप ! ।

करूं, पुत्र के स्नेह से मैं अपने अज्ञानी पुत्र दुर्योधन को त्याग नहीं सकता हूँ ॥१।३॥

यह सुनकर व्यास जी ने कहा—हे धृतराष्ट्र ! तुम सत्य कहते हो । संसार में पुत्र से बढ़कर और कोई पदार्थ नहीं । परन्तु जिस पुत्र के कारण से शोक उत्पन्न हो, उस पुत्र को मैं शत्रु के समान जानता हूँ । अब मैं तुमको इन्द्र और कामधेनु का उपाख्यान सुनाता हूँ, जिसमें इन्द्र ने कामधेनु को रोते हुए देखकर और-और कारणों से यह समझ लिया, कि पुत्र से अधिक कुछ नहीं है । एक समय ऐसा हुआ, कि स्वर्ग में गौओं की माता कामधेनु रो रही थी । उसी समय वहां इन्द्र भी आ गया और उसे रोती हुई देखकर कहने लगा—हे कल्याणी ! तुम किसलिए रोती हो ? देवलोक, मनुष्यलोक, और नागलोक में तो कुछ अनिष्ट नहीं हुआ ? ॥४।८॥

यह सुनकर कामधेनु ने कहा—हे देवेन्द्र ! मैं तो पुत्र-शोक से खिन्न होकर रो रही हूँ । देखो, यह नीच किसान मेरे दुर्बल पुत्र को, जो अपने बल के अनुसार हल को खींच रहा है, कोड़ों से मार रहा है और बड़ा कष्ट दे रहा है । मुझसे वह दुःख देखा नहीं जाता । मेरा पुत्र व्याकुल होकर बार-बार बैठ जाता है, तो पीटा जाता है । इन दोनों मेरे पुत्रों में एक बलवान् है, इसी कारण अधिक बोझ लाद सकता है । दूसरा दुर्बल है । उसके शरीर में हड्डियां

कृपाऽऽविष्टास्मि देवेन्द्र ! मनश्चोद्विजते मम ॥ ११ ॥
एकस्त्वत्र बलोपेतो धुरमुद्वहतेऽधिकाम् ।
अपरोऽप्यबलप्राणः कृशो धमनिसन्ततः ।
कृच्छ्रादुद्वहते भारं तं वै शोचामि वासव ! ॥ १२ ॥
वध्यमानः प्रतोदेन तुद्यमानः पुनः पुनः ।
नैव शक्नोति तं भारमुद्वोढुं पश्य वासव ! ॥ १३ ॥
ततोऽहं तस्य शोकार्ता विरौमि भृशदुःखिता ।
अश्रूण्यावर्तयन्ती च नेत्राभ्यां करुणायती ॥ १४ ॥
शक्र उवाच—तव पुत्रसहस्रेषु पीड्यमानेषु शोभने ! ।
किं कृपायितवत्यत्र पुत्र एकत्र हन्यति* ॥ १५ ॥
सुरभिरुवाच—यदि पुत्रसहस्राणि सर्वत्र समतैव मे ।
दीनस्य तु सतः शक्र ! पुत्रस्याभ्यधिका कृपा ॥ १६ ॥
व्यास उवाच–तदिन्द्रः सुरभीवाक्यं निशम्य भृशविस्मितः ।
जीवितेनापि कौरव्य ! मेनेऽभ्यधिकमात्मजम् ॥ १७ ॥
प्रववर्ष च तत्रैव सहसा तोयमुल्बणम् ।
कर्षकस्याचरन्विघ्नं भगवान्पाकशासनः ॥ १८ ॥
तद्यथा सुरभिः प्राह समवेतास्तु ते तथा ।

ही हड्डियाँ देख पड़ती हैं। इसी कारण वह अधिक बोझ नहीं लाद सकता। हे इन्द्र ! देखो, बार-बार, कोड़े की मार खाकर भी वह अधिक परिश्रम नहीं कर सकता। इस कारण मैं अत्यन्त दुःखित और शोकाकुल होकर आंसू बहाती हुई करुण स्वर से रो रही हूँ ॥९।१४॥

यह सुनकर, इन्द्र ने कहा—हे शोभने ! तुम्हारे हज़ारों पुत्र पीड़ित हो रहे हैं, फिर तुम केवल एक को ही ऐसी दशा में देखकर दुःखित क्यों हो रही हो ? कामधेनु ने कहा—हे इन्द्र ! हां, मेरे हज़ारों पुत्र हैं और उनपर मेरा स्नेह भी समान है। परन्तु जो पुत्र परोपकारी है, उसे दीन देखकर मेरे हृदय में अत्यन्त करुणा होती है। व्यासजी कहते हैं, कामधेनु के ये वचन सुनकर इन्द्र को बड़ा आश्चर्य हुआ। उन्होंने समझ लिया कि संसार में पुत्र प्राणों से भी बढ़कर प्यारा होता है। इसके पश्चात् उस किसानके उक्त निष्ठुर कार्य में विघ्न डालने के लिये इन्द्र ने लगातार मूसलाधार वर्षा की ।१५।१८।

हे धृतराष्ट्र ! जैसा कामधेनु ने कहा था उसी प्रकार यद्यपि कई पुत्र मनुष्य के हों परन्तु जो दीन और दुखी होता है उस पर विशेष प्रीति होती है। मेरा पुत्र जैसा पाण्डु था वैसा ही तुम और

* हन्यति- हन्यमाने इत्यर्थः। कृपायितवती-कृपां कृतवतीत्यर्थः।

सुतेषु राजन् ! सर्वेषु हीनेष्वभ्यधिका कृपा ॥ १९ ॥
यादृशो मे सुतः पाण्डुस्तादृशो मेऽसि पुत्रक ! ।
विदुरश्च महाप्राज्ञः स्नेहादेतद् ब्रवीम्यहम् ॥ २० ॥
चिराय तव पुत्राणां शतमेकश्च भारत ! ।
पाण्डोः पञ्चैव लक्ष्यन्ते तेऽपि मन्दाः सुदुःखिताः ॥ २१ ॥
कथं जीवेयुरत्यन्तं कथं वर्धेयुरित्यपि ।
इति दीनेषु पार्थेषु मनो मे परितप्यते ॥ २२ ॥
यदि पार्थिव ! कौरव्याञ्जीवमानानिहेच्छसि ।
दुर्योधनस्तव सुतः शमं गच्छतु पाण्डवैः ॥ २३ ॥
इति श्रीमन्महाभारते वनपर्वणि आरण्यकपर्वणि सुरभ्युपाख्यानं नाम नवमोऽध्यायः ॥ ९ ॥

विदुर हो, मेरे लिये सभी एक जैसे है । परन्तु तुम्हारे तो एक सौ एक पुत्र हैं और पाण्डु के, केवल पाच ही पुत्र हैं और वे पाच भी अत्यन्त दु:खी हैं । उनकी ऐसी दशा देखकर दिन-रात इसी चिन्ता से मेरा हृदय सन्तप्त हो रहा है, कि किस तरह वे जीवित रहेंगे और किस उपाय से उनकी उन्नति होगी । इसलिये हे राजा धृतराष्ट्र ! यदि तुम कौरवों को जिलाना चाहते हो, तो अपने पुत्र दुर्योधन और पाण्डवों का मिलाप करा दो ॥१९।२३॥

वनपर्व का नवमां अध्याय समाप्त हुआ ॥ ९ ॥

अथ दशमोऽध्यायः ॥ १० ॥

धृतराष्ट्र उवाच—एवमेतन्महाप्राज्ञ ! यथा वदसि नो मुने ! ।
अहं चैव विजानामि सर्वे चेमे नराधिपाः ॥ १ ॥
भवांश्च मन्यते साधु यत्कुरूणां महोदयम् ।
तदेव विदुरोऽप्याह भीष्मो द्रोणश्च मां मुने ! ॥ २ ॥
यदि त्वहमनुग्राह्यः कौरव्येषु दया यदि ।
अनुशाधि दुरात्मानं पुत्रं दुर्योधनं मम ॥ ३ ॥

दसवां अध्याय ॥ १० ॥

धृतराष्ट्र ने कहा—हे महामुनि ! आप सत्य कहते हैं । मैं भी ऐसा ही जानता हूँ और ये सब राजा लोग और भीष्म, विदुर और द्रोणाचार्य भी कौरवों का उदय ही चाहते है । परन्तु जो आपका मेरे ऊपर अनुग्रह है, कौरवों पर दया है, तो आप मेरे दुष्ट पुत्र को शिक्षा दीजिए । यह सुनकर व्यास जी ने कहा—हे कौरव ! आज मैत्रेय ऋषि पाण्डवों के पास होते हुए हम लोगों को देखने आ रहे हैं ।

व्यास उवाच—अयमायाति वै राजन्! मैत्रेयो भगवानृषिः ।
अन्विष्य पाण्डवान्भ्रातॄनिहैत्यस्मद्दिदृक्षया ॥ ४ ॥
एष दुर्योधनं पुत्रं तव राजन्! महानृषिः ।
अनुशास्ता यथान्यायं शमायास्य कुलस्य च ॥ ५ ॥
ब्रूयाद्यदेष कौरव्य! तत्कार्यमविशङ्कया ।
अक्रियायां तु कार्यस्य पुत्रं ते शप्स्यते रुषा ॥ ६ ॥
वैशम्पायन उवाच—एवमुक्त्वा ययौ व्यासो मैत्रेयः प्रत्यदृश्यत ।
पूजया प्रतिजग्राह सपुत्रस्तं नराधिपः ॥ ७ ॥
अर्घाद्याभिः क्रियाभिर्वै विश्रान्तं मुनिसत्तमम् ।
प्रश्रयेणाब्रवीद्राजा धृतराष्ट्रोऽम्बिकासुतः ॥ ८ ॥
सुखेनाऽऽगमनं कच्चिद्भगवन्! कुरुजाङ्गलान्? ।
कच्चित्कुशलिनो वीरा भ्रातरः पञ्च पाण्डवाः? ॥ ९ ॥
समये स्थातुमिच्छन्ति कच्चिच्च भरतर्षभाः? ।
कच्चित्कुरूणां सौभ्रात्रमव्युच्छिन्नं भविष्यति? ॥ १० ॥
मैत्रेय उवाच—तीर्थयात्रामनुक्रामन्प्राप्तोऽस्मि कुरुजाङ्गलान् ।
यदृच्छया धर्मराजं दृष्टवान्काम्यके वने ॥ ११ ॥
तं जटाऽजिनसंवीतं तपोवननिवासिनम् ।

वह तेरे पुत्र को न्याय के अनुसार कुल की शांति के लिये शिक्षा करेंगे ॥१।५॥

सो तुम को जो कुछ वह कहें, शंका रहित करना उचित है और जो तुम अवश्य करने के योग्य काम को न करोगे, तो मैत्रेय जी तुम्हारे पुत्र को शाप दे देंगे। वैशम्पायन ने कहा—हे राजा जनमेजय! व्यास जी उक्त प्रकार से कहकर चले गये और मैत्रेय ऋषि ने आकर दर्शन दिये। राजा धृतराष्ट्र ने अपने पुत्र सहित उनको बड़े आदर-सत्कार से लिया और विधि के अनुसार अर्घ आदि से उनकी पूजा की। इसके पश्चात् विश्राम कर चुकनेपर राजा धृतराष्ट्र कहने लगे—हे महाराज! कुरु जङ्गल से यहां आते समय आप को कुछ दुःख तो नहीं हुआ! पांचों पाण्डव कुशल से है न! वे अपने प्रण को पूरा करना चाहते हैं न! कुरुवंशियों की भ्रातृ सम्बन्धी प्रीति तो नाश न होगी! ॥६।१०॥

यह सुनकर मैत्रेय जी ने कहा—हे महाराज! मैं तीर्थयात्रा करता हुआ अकस्मात् काम्यक वन में जा निकला था और वहां मैंने धर्मराज युधिष्ठिर को देखा। उस वन में उन महात्मा युधिष्ठिर को देखने की इच्छा से बहुत से मुनि लोग आये थे। मैंने वहां पर तुम्हारे पुत्र के जुआरूपी अनर्थ और अनीति और बड़े भय का हाल सुना था। यह सुनकर मैं

समाजग्मुर्महात्मानं द्रष्टुं मुनिगणाः प्रभो ! ॥ १२ ॥
तत्राश्रौषं महाराज ! पुत्राणां तव विभ्रमम् ।
अनयं द्यूतरूपेण महाभयमुपस्थितम् ॥ १३ ॥
ततोऽहं त्वामनुप्राप्तः कौरवाणामवेक्षया ।
सदा ह्यभ्यधिकः स्नेहः प्रीतिश्च त्वयि मे प्रभो ! ॥ १४ ॥
नैतदौपयिकं राजंस्त्वयि भीष्मे च जीवति ।
यदन्योऽन्येन ते पुत्रा विरोध्यन्ते कथंचन ॥ १५ ॥
मेढीभूतः स्वयं राजन् ! निग्रहे प्रग्रहे भवान् ।
किमर्थमनयं घोरमुत्पद्यन्तमुपेक्षसे ॥ १६ ॥
दस्यूनामिव यद्वृत्तं सभायां कुरुनन्दन ! ।
तेन न भ्राजसे राजंस्तापसानां समागमे ॥ १७ ॥
वैशम्पायन उवाच—ततो व्यावृत्य राजानं दुर्योधनममर्पणम् ।
उवाच श्लक्ष्णया वाचा मैत्रेयो भगवानृषिः ॥ १८ ॥
मैत्रेय उवाच—दुर्योधन ! महाबाहो ! निबोध वदतांवर ! ।
वचनं मे महाभाग ! ब्रुवतो यद्धितं तव ॥ १९ ॥
मा द्रुहः पाण्डवाराजन् ! कुरुष्व प्रियमात्मनः ।
पाण्डवानां कुरूणां च लोकस्य च नरर्षभ ! ॥ २० ॥
ते हि सर्वे नरव्याघ्राः शूरा विक्रान्तयोधिनः ।
सर्वे नागायुतप्राणा वज्रसंहनना दृढाः ॥ २१ ॥

तुम्हारी प्रीति और स्नेह के कारण से कौरवों को देखने को यहां चला आया हूँ। सो मुझको बड़ा आश्चर्य है, कि तुम्हारे और भीष्म के जीते जी तुम्हारे पुत्रों में क्योंकर विरोध हुआ ॥११।१५॥

तुम को दण्ड देने और अनुग्रह करने का सब अधिकार था, फिर क्या कारण है, जो तुमने ऐसी अनीति होने दी। तुम्हारी सभा में चोरों की सी जो-जो बातें हुईं, वह तुम जस तपस्वियों की मण्डली में शोभा नहीं देती हैं। वैशम्पायन ने कहा—हे राजा जनमेजय ! इसके पश्चात् भगवान् मैत्रेय जी ने सम्मुख होकर मधुर वाणी से दुर्योधन से कहा—हे महाबाहो ! हे महाभाग दुर्योधन ! मैं तुम्हारे हित के लिये जो कहता हूं, सो सुनो। तुम पाण्डवों से विरोध मत करो। हे भाई ! ऐसा काम करो, जिसमें तुम, पाण्डव, कौरव और सब संसार प्रसन्न हो। हे भाई ! पाण्डव बड़े शूरवीर, बड़े पराक्रमी

सत्यव्रत-धराः सर्वे सर्वे पुरुषमानिनः ।
हन्तारो देवशत्रूणां रक्षसां कामरूपिणाम् ॥ २२ ॥
हिडिम्ब-वकमुख्यानां किर्मीरस्य च रक्षसः ।
इतः प्रद्रवतां रात्रौ यः स तेषां महात्मनाम् ॥ २३ ॥
आवृत्य मार्गं रौद्रात्मा तस्थौ गिरिरिवाचलः ।
तं भीमः समरश्लाघी वलेन वलिनां वरः ॥ २४ ॥
जघान पशुमारेण व्याघ्रः क्षुद्रमृगं यथा । 
पश्य दिग्विजये राजन् ! यथा भीमेन पातितः ॥ २५ ॥
जरासन्धो महेष्वासो नागाऽयुतवलो युधि ।
सम्बन्धी वासुदेवश्च श्यालाः सर्वे च पार्षताः ॥ २६ ॥
कस्तान्युधि समासीत जरामरणवान्नरः ।
तस्य ते शम एवाऽस्तु पाण्डवैर्भरतर्षभ ! ॥ २७ ॥
कुरु मे वचनं राजन् ! मा मन्युवशमन्वगाः ।
वैशम्पायन उवाच–एवं तु ब्रुवतस्तस्य मैत्रेयस्य विशांपते ! ॥ २८ ॥
ऊरुं गजकराकारं करेणाऽभिजघान सः ।
दुर्योधनः स्मितं कृत्वा चरणेनोल्लिखन्महीम् ॥ २९ ॥

बड़े योद्धा, दस दस हजार हाथियों के समान बड़े बली, वज्र रूपी देहधारी और बड़े दृढ़ हैं ॥१६।२१॥

इस के सिवा, वे सत्यप्रतिज्ञ हैं; उन्हें अपने पौरुष का अभिमान है । देखो, उन्होंने हिडिम्ब, बक, किर्मीर आदि कामचारी देवशत्रु राक्षसों को मारा है । एक दिन, रात्रि के समय, महात्मा पाण्डवों को देखकर निशाचर किर्मीर पर्वत की तरह अचल भाव से उनकी राह रोककर खड़ा हो गया । समर में बड़ाई पाने वाले, श्रेष्ठ बली भीमसेन ने बाघ जैसे साधारण पशु को मार डालता है, वैसे खेलते खेलते उस निशाचर को मार डाला । इसके सिवा, उन्हीं भीमसेन ने दिग्विजय के लिये निकल कर, हजार हाथियों का बल रखनेवाले जरासन्ध को बाहु-युद्ध में मारा है । वासुदेव श्रीकृष्णचन्द्र पाण्डवों के परम-मित्र हैं और राजा द्रुपद के पुत्र उनके साले हैं । ॥२२।२६॥

इसलिये बुढ़ापे और मरण के वशवर्ती मनुष्यों में कौन ऐसा साहसी और बलवान् है, जो पाण्डवों से युद्ध करने की इच्छा करे ? हे दुर्योधन ! मेरी बात मानकर शीघ्र पाण्डवों से मेल कर लो । वैरविरोध मत बढ़ाओ । वैशम्पायन ने कहा–हे राजा जनमेजय ! महर्षि मैत्रेय यह कहकर चुप होगये । दुर्बुद्धि दुर्योधन, हाथी की सूँड़ सी, अपनी जाँघ पर हाथ मारकर मुसकराता हुआ पाँव के अंगूठे से पृथ्वी खोदने लगा । वह कुछ भी न कहकर

न किंचिदुक्त्वा दुर्मेधास्तस्थौ किंचिदवाङ्मुखः ।
तमशुश्रूषमाणं तु विलिखन्तं वसुन्धराम् ॥ ३० ॥
दृष्ट्वा दुर्योधनं राजन्! मैत्रेयं कोप आविशत् ।
स कोपवशमापन्नो मैत्रेयो मुनिसत्तमः ॥ ३१ ॥
विधिना संप्रणुदितः शापायाऽस्य मनो दधे ।
ततः स वार्युपस्पृश्य कोपसंरक्तलोचनः ॥ ३२ ॥
मैत्रेयो धार्तराष्ट्रं तमशपद् दुष्टचेतसम् ।
यस्मात्त्वं मामनादृत्य नेमां वाचं चिकीर्षसि ।
तस्मादस्याऽभिमानस्य सद्यः फलमवाप्नुहि ॥ ३३ ॥
त्वदभिद्रोहसंयुक्तं युद्धमुत्पत्स्यते महत् ।
तत्र भीमो गदाघातैस्तवोरुं भेत्स्यते बली ॥ ३४ ॥
इत्येवमुक्ते वचने धृतराष्ट्रो महीपतिः ।
प्रसादयामास मुनिं नैतदेवं भवेदिति ॥ ३५ ॥
मैत्रेय उवाच—शमं यास्यति चेत्पुत्रस्तव राजन् यदा तदा ।
शापो न भविता तात विपरीते भविष्यति ॥ ३६ ॥
वैशम्पायन उवाच—*विलक्षयंस्तु राजेन्द्रो दुर्योधनपिता तदा ।

सिर झुकाये बैठा रहा। वह अपमान देखकर, मैत्रेय जी क्रोधित हो गये और शाप देने की इच्छा से लाल-लाल नेत्र किये हुए, दैव की प्रेरणा से आचमन कर शाप देने लगे ॥२७।३२॥

हे दुर्योधन! जो तूने अभिमान से अन्धा होकर मेरा अपमान किया है, मेरी बात नहीं मानी है, इस कारण तू शीघ्र ही इसका फल पावेगा। इस द्रोह के कारण पाण्डवों के साथ जो तेरा युद्ध होगा, उसमें महाबाहु भीमसेन गदा के प्रहार से तेरी इस जांघ को तोड़ डालेंगे। यह सुनकर धृतराष्ट्र ने मैत्रेय जी को प्रसन्न किया और कहा, कि महाराज ऐसा कीजिये, जिसमें यह बात न होवे। यह सुनकर मैत्रेय जी ने कहा—यदि तुम्हारा पुत्र दुर्योधन पाण्डवों से मिलाप कर लेगा, तो यह शाप नहीं लगेगा; नहीं तो जैसा हमने कहा है, वैसा ही होगा ॥३३।३६॥

वैशम्पायन ने कहा—हे राजा जनमेजय! इसके पीछे राजा धृतराष्ट्र ने भीमसेन के बल का स्मरण करके मैत्रेय जी से पूछा—हे महाराज! भीमसेन ने किस तरह किर्मीर राक्षस को मारा था? यह सुनकर मैत्रेय जी ने कहा—जो मेरा कथन तुमको अच्छा नहीं मालूम पड़ता और तुम्हारा पुत्र सुनना नहीं चाहता, इससे मैं नहीं कहूँगा। मेरे जाने पर ये

* विलक्षयन् इत्यस्य भीमबलं कियदधिकमिति विशेषेण बुभुत्समान इत्यर्थः।

मैत्रेयं प्राह किर्मीरः कथं भीमेन पातितः ॥ ३७ ॥

मैत्रेय उवाच—नाहं वक्ष्यामि ते भूयो न ते शुश्रूषते सुतः ।

एप ते विदुरः सर्वमाख्यास्यति गते मयि ॥ ३८ ॥

इत्येवमुक्त्वा मैत्रेयः प्रातिष्ठत यथागतम् ।

किर्मीरवधसंविग्नो बहिर्दुर्योधनो ययौ ॥ ३९ ॥

इति श्रीमन्महाभारते वनपर्वणि आरण्यकपर्वणि मैत्रेयशापे दशमोऽध्यायः ॥ १० ॥

समाप्तं च आरण्यकपर्व ॥

विदुर जी किर्मीर के मारे जाने का सब वृत्तान्त कहेंगे । यह कहकर मैत्रेय जी तो चले गये और दुर्योधन किर्मीर दैत्य का वध सुनकर व्याकुल हो कर बाहर को चला गया ॥३७।३९॥

वनपर्व का दसवां अध्याय समाप्त हुआ ॥ १० ॥

अथ किर्मीरवधपर्व ।

अथ एकादशोऽध्यायः ॥ ११ ॥

धृतराष्ट्र उवाच—किर्मीरस्य वधं क्षत्तः ! श्रोतुमिच्छामि कथ्यताम् ।

रक्षसा भीमसेनस्य कथमासीत्समागमः ॥ १ ॥

विदुर उवाच—शृणु भीमस्य कर्मेदमतिमानुपकर्मणः ।

श्रुतपूर्वं मया, *तेषां कथान्तेषु पुनः पुनः ॥ २ ॥

इतः प्रयाता राजेन्द्र ! पाण्डवाद्यूतनिर्जिताः ।

जग्मुस्त्रिभिरहोरात्रैः काम्यकं नाम तद्वनं ॥ ३ ॥

रात्रौ निशीथे× स्वाभीले गतेऽर्धसमये नृप ! ।

ग्यारहवां अध्याय ॥ ११ ॥

धृतराष्ट्र ने कहा–हे विदुर ! भीमसेन के साथ किर्मीर राक्षस का युद्ध किस तरह हुआ ? भीमसेन ने किस तरह उस राक्षस को मारा ? यह वृत्तान्त सुनने की मुझे बड़ी इच्छा है । विदुर ने कहा–हे राजन् ! उस अमानुष कर्म करनेवाले भीमसेन के कार्यों का वर्णन प्रायः कथाओं के प्रसङ्ग में हुआ करता है । इसी तरह मैंने कथा के प्रसङ्ग में यह किर्मीर-वध सम्बन्धी भीमसेन का काम सुना है । सुनिए–पाण्डव लोग जुए में हारकर, यहां से चलकर, तीन दिन और तीन रात चलते-चलते, भयानक आधी रात के समय–मनुष्यों के मांस और लोहू को खाने पीनेवाले क्रूर-कर्मा राक्षसों के रहने के स्थान-काम्यक वन में पहुँचे ॥१।३॥

सब वनचारी और तापस लोग राक्षसों के भय

*तेषां कथान्तेषु-पाण्डवानां कथाप्रसंगेषु । ×स्वाभीले भयानक ।

॥ ४ ॥
प्रचारे पुरुषादानां रक्षसां घोरकर्मणाम् ।
तद्वनं तापसा नित्यं गोपाश्च वनचारिणः ॥ ५ ॥
दूरात्परिहरन्ति स्म पुरुषादभयात्किल ।
तेषां प्रविशतां तत्र मार्गमावृत्य भारत ! ॥ ६ ॥
दीप्ताक्षं भीषणं रक्ष सोल्मुकं प्रत्यपद्यत
बाहू महान्तौ कृत्वा च तथाऽऽस्यं च भयानकम् । ॥ ७ ॥
स्थितमावृत्य पन्थानं येन यान्ति कुरूद्वहाः ।
स्पष्टाष्टदंष्ट्रं ताम्राक्षं प्रदीप्तोर्ध्वशिरोरुहम् ॥ ८ ॥
सार्करश्मितडिच्चक्रं सबलाकमिवाम्बुदम् ।
सृजन्तं राक्षसीं मायां महानादनिनादितम् ॥ ९ ॥
मुञ्चन्तं विपुलान्नादान्सतोयमिव तोयदम् ।
तस्य नादेन संत्रस्ताः पक्षिणः सर्वतो दिशम् ॥ १० ॥
विमुक्तनादाः संपेतुः स्थलजाः जलजैः सह ।
संप्रद्रुतमृगद्वीपिमहिषर्क्षसमाकुलम् ॥ ११ ॥
तद्वनं तस्य नादेन संप्रस्थितमिवाभवत् ।
तस्योरुवाताभिहतास्ताम्रपल्लवबाहवः ॥ १२ ॥
विदूरजाताश्च लताः समाश्लिष्यन्ति पादपान् ॥ १२ ॥

से उस वन को दूर से ही छोड़ जाते थे । पाण्डव लोग उसी वन में प्रवेश करने लगे । इसी समय उन्होंने देखा, कि चमकती हुई आँखोंवाला एक राक्षस हाथ में जलती हुई मशाल लिये, दोनों हाथ फैलाये, राह रोके, उनके सामने चला आ रहा है । उसका मुख भयानक है । उसकी आठों लम्बी-लम्बी श्वेत दाढ़ें दिल दहला देनेवाली हैं । आँखें तांबे के रङ्ग की हैं । खड़े हुए सिर के बाल चमक रहे हैं । वह सूर्य की किरणों से रञ्जित, बिजली और बगलों से शोभित, काले बादल के समान जान पड़ता है । पाण्डवों के सामने आते ही राक्षसी माया फैलाकर वह वर्षाकाल के बादलों के समान भयानक शब्द करके गरजने लगा ॥४।९॥

उसके भयानक शब्द से सब बनवासी पक्षी डर गये और जलचारी जीव भयभीत होकर अपनी-अपनी बोली में आर्त्त शब्द करने लगे । उस समय मृग, भैंसे, शेर, रीछ आदि जीवों के इधर से उधर और उधर से इधर भागने के कारण से, वह वन ऐसा दीखने लगा, मानों वन चलता है । और उस वन के लाल लाल पत्ते रखनेवाले वृक्ष, जो दूर-दूर पर भी थे, उस राक्षस की आँधी के चलने की हवा से उखड़-उखड़ कर दूसरे वृक्षों पर जा-जा पड़े । उसी समय

तस्मिन्क्षणेऽथ प्रववौ मारुतो भृशदारुणः ।
रजसा संवृतं तेन नष्टज्योतिरभून्नभः ॥ १३ ॥
पञ्चानां पाण्डुपुत्राणामविज्ञातो महारिपुः ।
पञ्चानामिन्द्रियार्थानां शोकावेश इवातुलः ॥ १४ ॥
स दृष्ट्वा पाण्डवान्दूरात्कृष्णाजिनसमावृतान् ।
आवृणोत्तद्वनद्वारं मैनाक इव पर्वतः ॥ १५ ॥
तं समासाद्य वित्रस्ता कृष्णा कमललोचना ।
अदृष्टपूर्वं संत्रासान्न्यमीलयत लोचने ॥ १६ ॥
दुःशासनकरोत्सृष्टविप्रकीर्णशिरोरुहा ।
पञ्चपर्वतमध्यस्था नदीवाऽऽकुलतां गता ॥ १७ ॥
मोमुह्यमानां तां तत्र जगृहुः पञ्च पाण्डवाः ।
इन्द्रियाणि प्रसक्तानि विषयेषु यथा रतिम् ॥ १८ ॥
अथ तां राक्षसीं मायामुत्थितां घोरदर्शनाम् ।
रक्षोघ्नैर्विविधैर्मन्त्रैर्धौम्यः सम्यक्प्रयोजितैः ।
पश्यतां पाण्डुपुत्राणां नाशयामास वीर्यवान् ॥ १९ ॥
स नष्टमायोऽतिबलः क्रोधविस्फारितेक्षणः ।

---

उस वन में वायु बड़े वेग से चलने लगी, जिसके कारण से आकाशमण्डल में धूल छा गई और चारों ओर अँधेरा हो गया ॥१०।१३॥

पांचों ज्ञानेन्द्रियाँ जिस तरह, अपने शत्रुशोक के वेग को नहीं जान सकतीं, उसी तरह पांचों पाण्डव उस राक्षस को नहीं जानते थे, कि वह उनका परम शत्रु है । काली मृगछाला पहने हुए पाण्डवों को दूर से देखकर, मैनाक पर्वत के समान, उस राक्षस ने वन के द्वार को रोक लिया । और द्रौपदी पहले कभी किसी दैत्य को न देखने के कारण से भयभीत हो गई, और उसने अपनी दोनों आंखें बन्द कर लीं । उस समय यह द्रौपदी जिसके बाल बिखरे हुए थे, उन पांचों पाण्डवों के बीच में इस प्रकार से व्याकुल हो गई, मानों पाँच पहाड़ों के बीच में होकर, नदी व्याकुलता से बह रही है ॥१४।१७॥

पाण्डवों ने द्रौपदी को अचेत देखकर इस प्रकार से पकड़ लिया, जैसे विषयों में लगी हुई इन्द्रियां रति को ग्रहण करती हैं। उस समय धौम्य ऋषि ने राक्षसों को नाश करनेवाले मन्त्रों से उस राक्षस की सब माया पाण्डवों के देखते-देखते दूर कर दी, और वह राक्षस माया के नष्ट होने पर नेत्र फाड़े हुए काल के समान दीखने लगा । अब युधिष्ठिर ने उस से कहा—आप कौन हो ? और किस के पुत्र हो ? हम आपका क्या कार्य करें ? यह सुन-

कामसूर्तिधरः क्रूरः कालकल्पो व्यदृश्यत ॥ २० ॥
तमुवाच ततो राजा दीर्घप्रज्ञो युधिष्ठिरः ।
को भवान्कस्य वा किं ते क्रियतां कार्यमुच्यताम् ॥ २१ ॥
प्रत्युवाचाऽथ तद्रक्षो धर्मराजं युधिष्ठिरम् ।
अहं बकस्य वै भ्राता किर्मीर इति विश्रुतः ॥ २२ ॥
वनेऽस्मिन्काम्यके शून्ये निवसामि गतज्वरः ।
युधि निर्जित्य पुरुषानाहारं नित्यमाचरन् ॥ २३ ॥
के यूयमभिसंप्राप्ता भक्ष्यभूता ममाऽन्तिकम् ।
युधि निर्जित्य वः सर्वान्भक्षयिष्ये गतज्वरः ॥ २४ ॥
वैशम्पायन उवाच—युधिष्ठिरस्तु तच्छ्रुत्वा वचस्तस्य दुरात्मनः ।
आचचक्षे ततः सर्वं गोत्रनामादि भारत ! ॥ २५ ॥
युधिष्ठिर उवाच—पाण्डवो धर्मराजोऽहं यदि ते श्रोत्रमागतः ।
सहितो भ्रातृभिः सर्वैर्भीमसेनार्जुनादिभिः ॥ २६ ॥
हृतराज्यो वने वासं वस्तुं कृतमतिस्ततः ।
वनमभ्यागतो घोरमिदं तव परिग्रहम् ॥ २७ ॥
विदुर उवाच—किर्मीरस्त्वब्रवीदेनं दिष्ट्या देवैरिदं मम ।
उपपादितमद्येह चिरकालान्मनोगतम् ॥ २८ ॥
भीमसेनवधार्थं हि नित्यमभ्युद्यतायुधः ।

कर दैत्य ने कहा—मैं किर्मीर नाम का दैत्य बकासुर का भाई हूँ और इस काम्यक वन में निर्भय रहता हूँ और आये हुए मनुष्यों को युद्ध में जीतकर भक्षण किया करता हूँ। तुम बताओ कौन हो? तुम सब को अब मैं जीतकर भक्षण करूँगा ॥१८।२४॥

वैशम्पायन ने कहा—हे राजा जनमेजय ! युधिष्ठिर उस दुरात्मा दैत्य की बात को सुनकर उसे अपना गोत्र और नाम बताने लगे, कि मैं पाण्डु का पुत्र धर्मराज युधिष्ठिर हूँ और ये चारों भीमसेन अर्जुन, नकुल, सहदेव नाम के मेरे भाई हैं। शायद तुमने मेरा नाम सुना होगा। इस समय राज्य छिन जाने से बनवास का विचार करके, मैं तुम्हारे निवास-स्थान इस घोर वन में आया हूँ। यह सुनकर उस राक्षस ने कहा—देवताओं की कृपा और मेरे भाग्य से आज मुझे इच्छा के अनुसार भोजन मिला है। ॥२५।२८॥

मैं भीमसेन को मारने की इच्छा से शस्त्र लिये हुए बहुत दिनों से उसे ढूँढता फिरता हूँ। परन्तु मुझे

चरामि पृथिवीं कृत्स्नां नैनं चाऽऽसादयाम्यहम् ॥ २९ ॥
सोऽयमासादितो दिष्ट्या भ्रातृहा काङ्क्षितश्चिरम्।
अनेन हि मम भ्राता बको विनिहतः प्रियः ॥ ३० ॥
वैत्रकीयवने राजन् ! ब्राह्मणच्छद्मरूपिणा ।
विद्याबलमुपाश्रित्य न ह्यस्त्यस्यौरसं बलम् ॥ ३१ ॥
हिडिम्बश्च सखा मह्यं दयितो वनगोचरः ।
हतो दुरात्मनाऽनेन स्वसा चाऽस्य हृता पुरा ॥ ३२ ॥
सोऽयमभ्यागतो मूढो ममेदं गहनं वनम् ।
प्रचारसमयेऽस्माकमर्धरात्रे स्थिते समे ॥ ३३ ॥
अद्याऽस्य पातयिष्यामि तद्वैरं चिरसंभृतम् ।
तर्पयिष्यामि च बकं रुधिरेणास्य भूरिणा ॥ ३४ ॥
अद्याऽहमनृणो भूत्वा भ्रातुः सख्युस्तथैव च ।
शान्तिं लब्धास्मि परमां हत्वा राक्षसकण्टकम् ॥ ३५ ॥
यदि तेन पुरा मुक्तो भीमसेनो बकेन वै ।
अद्यैनं भक्षयिष्यामि पश्यतस्ते युधिष्ठिर ! ॥ ३६ ॥
एनं हि विपुलप्राणमद्य हत्वा वृकोदरम् ।
संभक्ष्य जरयिष्यामि यथाऽगस्त्यो महासुरम् ॥ ३७ ॥
एवमुक्तस्तु धर्मात्मा सत्यसन्धो युधिष्ठिरः ।
नैतदस्तीति संक्रुद्धो भर्त्सयामास राक्षसम् ॥ ३८ ॥

---

यह कहीं नहीं मिला। आज दैवयोग से मिला है। इसी ने मेरे प्यारे भाई बक को वैत्रकीय वन में कपट रूप ब्राह्मण के वेष से विद्याबल के द्वारा मारा था। इसी भीमसेन ने पहले मेरे हिडिम्ब नाम के मित्र को मारा था और उसकी बहन [illegible] ली थी। आहा! आज यह वही भीमसेन मेरे इस गहन वन में आधी रात को मेरे यहाँ होते हुए आया है ॥२९।३३॥

अब मैं इससे अपना पुराना वैर लेकर इसके लोहू से बक दैत्य को तृप्त करूँगा और इस राक्षसों के काँटे को उखाड़ कर अपने भाई और मित्र से अऋण होकर बैठूँगा। हे युधिष्ठिर! पहले यह भीमसेन बकासुर के हाथ से बच गया था, अब मैं इसे मारकर तुम्हारे सामने भक्षण करूँगा और इस प्रकार से इसको पचाऊँगा, जैसे अगस्त्य जी ने बड़े दैत्य वातापि को पचाया था ॥३४।३७॥

महात्मा युधिष्ठिर किर्मीर की ये बातें सुनकर

ततो भीमो महाबाहुरारुज्य तरसा द्रुमम् ।
दशव्याममथोद्विद्ध निष्पत्रमकरोत्तदा ॥ ३९ ॥
चकार सज्यं गाण्डीवं वज्रनिष्पेषगौरवम् ।
निमेषान्तरमात्रेण तथैव विजयोऽर्जुनः ॥ ४० ॥
निवार्य भीमो जिष्णुं तं तद्रक्षो मेघनिःस्वनम् ।
अभिद्रुत्याऽब्रवीद्वाक्यं तिष्ठ तिष्ठेति भारत ! ॥ ४१ ॥
इत्युक्त्वैनमभिक्रुद्धः कक्षामुत्पीड्य पाण्डवः ।
निष्पिष्य पाणिना पाणिं संदष्टौष्ठपुटो वली ॥ ४२ ॥
तमभ्यधावद्वेगेन भीमो वृक्षायुधस्तदा ।
यमदण्डप्रतीकाशं ततस्तं तस्य मूर्धनि ॥ ४३ ॥
पातयामास वेगेन कुलिशं मघवानिव ।
आसंभ्रान्तं तु तद्रक्षः समरे प्रत्यदृश्यत ॥ ४४ ॥
चिक्षेप चोल्मुकं दीप्तमशनिं ज्वलितामिव ।
तदुदस्तमलातं तु भीमः प्रहरतां वरः ॥ ४५ ॥
पदा सव्येन चिक्षेप तद्रक्षः पुनराव्रजत् ।
किर्मीरश्चाऽपि सहसा वृक्षमुत्पाट्य पाण्डवम् ॥ ४६ ॥
दण्डपाणिरिव क्रुद्धः समरे प्रत्यधावत ।

बहुत ही क्रोधित हुए और उस डाँटकर कहने लगे—अरे मूढ़ ! तेरी यह इच्छा कभी पूरी न होगी । उसी समय महाबाहु भीमसेन ने एक बड़ा पेड़ उखाड़ लिया और उसके पत्ते नोच डाले और अर्जुन ने गाण्डीव धनुष हाथ में लेकर एक पल भर में चलाने के योग्य कर लिया । उस समय भीमसेन ने अर्जुन को रोक दिया और उस मेघ के समान गरजते हुए राक्षस के सम्मुख जाकर कहने लगा, कि "ठहर जा, ठहर जा" और क्रोध से दांत पीसकर और कमर को बाँधकर हाथ मलता हुआ दौड़ा और यमराज के दण्ड के समान अपने उस वृक्ष रूपी शस्त्र को उस राक्षस के सिर पर इस प्रकार से मारा, मानों इन्द्र ने वज्र मारा है । उसके लगने से वह राक्षस संभ्रान्त सा हो गया ॥३८।४४॥

अब क्रोध से भरे हुए उस किर्मीर ने प्रज्वलित वज्र के समान जलती हुई उल्मुक अर्थात् मशाल भीमसेन पर चलाई । महाबलि भीमसेन ने खेल की तरह उस जलती मशाल को बायें पाँव से पकड़ कर उसी राक्षस के ऊपर फेंक दिया । उस समय उस दैत्य ने भी अकस्मात् एक वृक्ष उखाड़ लिया और क्रोधित होकर यमराज के समान भीमसेन पर दौड़ा । उन दोनों में युद्ध इस प्रकार से होने लगा, जैसे पूर्व

तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् ॥ ४७ ॥
वालिसुग्रीवयोर्भ्रात्रोर्यथा स्त्रीकाङ्क्षिणोः पुरा ।
शीर्षयोः पतिता वृक्षा बिभिदुर्नैकधा तयोः ॥ ४८ ॥
यथैवोत्पलमालानि मत्तयोर्द्विपयोस्तथा ।
मुञ्जवज्जर्जरीभूता बहवस्तत्र पादपाः ॥ ४९ ॥
चीराणीव व्युदस्तानि रेजुस्तत्र महावने ।
तद्वृक्षयुद्धमभवन्मुहूर्तं भरतर्षभ ! ।
राक्षसानां च मुख्यस्य नराणामुत्तमस्य च ॥ ५० ॥
ततः शिलां समुत्क्षिप्य भीमस्य युधि तिष्ठतः ।
प्राहिणोद्राक्षसः क्रुद्धो भीमश्च न चचाल ह ॥ ५१ ॥
तं शिलाताडनजडं पर्यधावत राक्षसः ।
बाहुविक्षिप्तकिरणः स्वर्भानुरिव भास्करम् ॥ ५२ ॥
तावन्योन्यं समाश्लिष्य प्रकर्षन्तौ परस्परम् ।
उभावपि चकाशेते प्रवृद्धौ वृषभाविव ॥ ५३ ॥
तयोरासीत्सुतुमुलः संप्रहारः सुदारुणः ।
नखदंष्ट्रायुधवतोर्व्याघ्रयोरिव दृप्तयोः ॥ ५४ ॥
दुर्योधननिकाराच्च बाहुवीर्याच्च दर्पितः ।

समय में तारा नाम स्त्री के पीछे वाली और सुग्रीव नामी दोनों भाइयों का युद्ध हुआ था। उन दोनों के वृक्षों से युद्ध करने के कारण से उस पृथ्वी के सब वृक्ष नाश हो गये और दोनों के सिरों पर लग-लग कर टुकड़े टुकड़े हो गये ॥४५।४८॥

जैसे दो मतवाले हाथियों के चरने से कमलों के बन के बन नाश हो जाते हैं, इसी प्रकार से उन दोनों नरोत्तम भीमसेन और राक्षसोत्तम किर्मीर के युद्ध से उस वन के वृक्ष मूञ्ज के समान तार-तार हो गये और बहुत से वृक्षों के बकले उतर-उतर कर गिर पड़े। एक मुहूर्त तक तो उन दोनों का युद्ध वृक्षों से हुआ। उपरान्त राक्षस ने एक बड़ी भारी शिला उठा कर भीमसेन पर चलाई, परन्तु भीमसेन अचल खड़ा रहा। तब राहु जैसे मुँह फैला-कर सूर्य को ग्रसने के लिये दौड़ता है, वैसे ही वह राक्षस दोनों हाथ फैलाकर भीमसेन को पकड़ने के लिये चला ॥४९।५२॥

जैसे दो साड लड़ते हों, वैसे दोनों वीर परस्पर लिपटकर और खींचकर भिड़ गये। बड़े बड़े नाखून और दाढ़ें ही जिनके शस्त्र हैं, उन प्रचण्ड दो व्याघ्रों की तरह वे भयङ्कर युद्ध कर रहे थे। सभा में बुला-कर दुर्योधन ने जो द्रौपदी का अपमान किया था,

|  | ॥ ५५ ॥ |
|---|---|
| कृष्णाकटाक्षदृष्टश्च व्यवर्धत वृकोदरः | । |
| अभिपद्य च बाहुभ्यां प्रत्यगृह्णादमर्षितः | ॥ ५६ ॥ |
| मातङ्गमिव मातङ्गः प्रभिन्नकरटामुखम् | । |
| स चाऽप्येनं ततो रक्षः प्रतिजग्राह वीर्यवान् | ॥ ५७ ॥ |
| तमाक्षिपद्भीमसेनो बलेन बलिनां वरः | । |
| तयोर्भुजाविनिष्पेषादुभयोर्बलिनोस्तदा | ॥ ५८ ॥ |
| शब्दः समभवद्धोरो वेणुस्फोटसमो युधि | । |
| अथैनमाक्षिप्य बलाद् गृह्य मध्ये वृकोदरः | ॥ ५९ ॥ |
| धूनयामास वेगेन वायुश्चण्ड इव द्रुमम् | । |
| स भीमेन परामृष्टो दुर्बलो बलिनो रणे | ॥ ६० ॥ |
| व्यस्पन्दत यथाप्राणं विचकर्ष च पाण्डवम् | । |
| तत एनं परिश्रान्तमुपलक्ष्य वृकोदरः | ॥ ६१ ॥ |
| योक्त्रयामास बाहुभ्यां पशुं रशनया यथा | । |
| विनदन्तं महानादं भिन्न भेरीस्वनं बली | ॥ ६२ ॥ |
| भ्रामयामास सुचिरं विस्फुरन्तमचेतसम् | । |
| तं विषीदन्तमाज्ञाय राक्षसं पाण्डुनन्दनः | ॥ ६३ ॥ |
| प्रगृह्य तरसा दोर्भ्यां पशुमारममारयत् |  |

उससे बाहुबल का अभिमान रखनेवाले भीमसेन बहुत ही कुपित थे। हाथी जैसे सूँड उठाकर दूसरे गजराज पर झपटता है, वैसे कुपित भीमसेन ने हाथों मे उस राक्षस को पकड़ लिया। राक्षस ने भी पहले से अधिक पराक्रम दिखाकर भीमसेन को पकड़ा। भीमसेन ने उसी दम उसे दूर पटक दिया। जैसे बाम फटता है, वैसे ही दोनों वीरों के बाहुप्रहार से घोर शब्द होने लगा। तब भीमसेन ने आक्रमण करके राक्षस की कमर पकड़ ली और वे उसे इस तरह घुमाने लगे जैसे आंधी से पेड़ हिले। अब वह राक्षस भीमसेन के भयङ्कर आक्रमण से निर्बल होकर काँपने और यथाशक्ति भीमसेन को खींचने लगा। भीमसेन ने जब उस राक्षस को बहुत ही निर्बल और थका हुआ पाया, तब उसको भुजाओं के बन्धन में इस तरह बांध लिया, जिस तरह कोई पशु को बांधता है ॥५३।६१॥

तब बहुत ही हीनबल होकर, वह राक्षस फटे हुए नगाड़े का सा विकट शब्द करने लगा। भीमसेन उसे ऊपर उठाकर घुमाने लगे। इस प्रकार से राक्षस के विवश और अचेत होने पर, भीमसेन ने उस पर ऐसे आक्रमण किया, जैसे सिंह किसी मृग पर झपटे। भीमसेन ने उसकी कमर पर घुटना

आक्रम्य च कटीदेशे जानुना राक्षसाधमम् ।
पीडयामास पाणिभ्यां तस्य कण्ठं वृकोदरः ॥ ६४ ॥
अथ जर्जरसर्वाङ्गं व्याविद्धनयनाम्बरम् ।
भूतले भ्रामयामास वाक्यं चेदमुवाच ह ॥ ६५ ॥
हिडिम्बबकयोः पाप ! न त्वमश्रुप्रमार्जनम् ।
करिष्यसि गतश्चासि यमस्य सदनं प्रति ॥ ६६ ॥
इत्येवमुक्त्वा पुरुषप्रवीरस्तं राक्षसं क्रोधपरीत-चेताः ।
विस्रस्तवस्त्राभरणं स्फुरन्तमुद्भ्रान्तचित्तं व्यसुमुत्ससर्ज ॥ ६७ ॥
तस्मिन्हते तोयदतुल्यरूपे कृष्णां पुरस्कृत्य नरेन्द्रपुत्राः।
भीमं प्रशस्याऽथ गुणैरनेकैर्हृष्टास्ततो द्वैतवनाय जग्मुः ॥ ६८ ॥
विदुर उवाच—एवं विनिहतः संख्ये किर्मीरो मनुजाधिप ! ।
भीमेन वचनात्तस्य धर्मराजस्य कौरव ! ॥ ६९ ॥
ततो निष्कण्टकं कृत्वा वनं तदपराजितः ।
द्रौपद्या सह धर्मज्ञो वसतिं तामुवास ह ॥ ७० ॥
समाश्वास्य च ते सर्वे द्रौपदीं भरतर्षभाः ।
प्रहृष्टमनसः प्रीत्या प्रशशंसुर्वृकोदरम् ॥ ७१ ॥
भीमबाहुबलात्पिष्टे विनष्टे राक्षसे ततः ।

रखकर दोनों हाथों से उसका गला दबा दिया। इससे उसके सब अङ्ग ढीले पड़ गये, बड़ी बड़ी आँखें बाहर निकल आईं। तब उसे पृथ्वी पर घसीट कर भीमसेन कहने लगे और पापी ! तू हिडिम्ब और बकासुर के आंसू नहीं पोंछ सकेगा। अब तू स्वयं यमराज के यहां जाने की तैयारी कर। क्रोध में भरे हुए पुरुषश्रेष्ठ भीमसेन ने इस तरह कहकर उस राक्षस को मार डाला। उसके कपड़े और गहने इधर-उधर बिखर गये, वह मरते समय व्याकुल हो कर छटपटाने लगा। इस तरह निर्जीव जानकर भीमसेन ने उस राक्षस को छोड़ दिया। बादल के से रङ्गवाले उस राक्षस के मरने पर, युधिष्ठिर आदि राजपुत्र भीमसेन की प्रशंसा करने लगे। इसके पश्चात् पाँचों पाण्डव द्रौपदी को आगे करके द्वैतवन की ओर चले ॥६२।६८॥

इतनी कथा सुनाकर विदुर जी ने कहा—हे राजा धृतराष्ट्र ! युधिष्ठिर की आज्ञा से भीमसेन ने इस प्रकार किर्मीर राक्षस को मारा था। इस प्रकार से वन के निष्कण्टक होने पर पाण्डव लोग द्रौपदी को दिलासा देने और भीमसेन की प्रशंसा करने के उपरान्त द्वैतवन में रहने का विचार करके विघ्नों से रहित मङ्गलमय वन के भीतर घुसे। हे कौरवश्रेष्ठ ! जब

विविशुस्ते वनं वीराः क्षेमं निहतकण्टकम् ॥ ७२ ॥
स मया गच्छता मार्गे विनिकीर्णो भयावहः ।
वने महति दुष्टात्मा दृष्टो भीमबलाद्धतः ॥ ७३ ॥
तत्राऽश्रौपमहं चैतत्कर्म भीमस्य भारत ! ।
ब्राह्मणानां कथयतां ये तत्राऽऽसन्समागताः ॥ ७४ ॥
वैशम्पायन उवाच-एवं विनिहतं संख्ये किर्मीरं रक्षसां वरम् ।
श्रुत्वा ध्यानपरो राजा निशश्वासाऽऽर्तवत्तदा ॥ ७५ ॥

इति श्रीमन्महाभारते वनपर्वणि किर्मीरवधपर्वणि विदुरवाक्ये एकादशोऽध्याय ॥ ११ ॥
समाप्तं च किर्मीरवधपर्व ।

मैं पाण्डवों के पास गया था, तब राह में मैंने भी उस दैत्य को मरा हुआ पड़ा देखा था। और वहां पर जो ब्राह्मण लोग इकट्ठे हुए थे, उन्हीं के मुख से मैंने यह भीमसेन के युद्ध का हाल सुना था। वैशम्पायन ने कहा–हे राजा जनमेजय ! अन्धे राजा धृतराष्ट्र भीमसेन के हाथों से किर्मीर दैत्य का वध सुनकर, दु खी हुए और चिन्ता करके श्वास लेने लगे ॥६९।७५॥

वनपर्व का ग्यारहवां अध्याय समाप्त हुआ ॥ ११ ॥

अथ अर्जुनाभिगमनपर्व ।

अथ द्वादशोऽध्याय. ॥ १२ ॥

वैशम्पायन उवाच–भोजाः प्रव्रजिताञ्छ्रुत्वा वृष्णयश्चाऽन्धकैः सह ।
पाण्डवान्दुःखसंतप्तान्समाजग्मुर्महावने ॥ १ ॥
पाञ्चालस्य च दायादो धृष्टकेतुश्च चेदिपः ।
केकयाश्च महावीर्या भ्रातरो लोकविश्रुताः ॥ २ ॥
वने द्रष्टुं ययुः पार्थान्क्रोधामर्षसमन्विताः ।
गर्हयन्तो धार्तराष्ट्रान्किं कुर्म इति चाऽब्रुवन् ॥ ३ ॥
वासुदेवं पुरस्कृत्य सर्वे ते क्षत्रियर्षभाः ।

बारहवां अध्याय ॥ १२ ॥

वैशम्पायन ने कहा–हे राजा जनमेजय ! पाण्डवों के वनवास और क्लेश का हाल सुनकर भोज, अन्धक और वृष्णि वंश के यादव, राजा द्रुपद के पुत्र, चेदि देश के राजा धृष्टकेतु और बड़े पराक्रमी पाचों भाई कैकेय उस महावन में पाण्डवों के पास आये। दुर्योधन आदि धृतराष्ट्र के पुत्रों की निन्दा और "क्या करना चाहिए !" इस बात का आन्दोलन करते हुए, सब लोग श्रीकृष्ण जी को आगे

परिवार्योपविविशुर्धर्मराजं युधिष्ठिरम् ।
अभिवाद्य कुरुश्रेष्ठं विषण्णः केशवोऽब्रवीत् ॥ ४ ॥

वासुदेव उवाच—दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुःशासनचतुर्थानां भूमिः पास्यति शोणितम् ॥ ५ ॥
एतान्निहत्य समरे ये च तस्य पदानुगाः ।
तांश्च सर्वान्विनिर्जित्य सहितान्सनराधिपान् ॥ ६ ॥
ततः सर्वेऽभिषिञ्चामो धर्मराजं युधिष्ठिरम् ।
निकृत्योपचरन्वध्य एष धर्मः सनातनः ॥ ७ ॥

वैशम्पायन उवाच पार्थानामभिषङ्गेण तथा क्रुद्धं जनार्दनम् ।
अर्जुनः शमयामास दिधक्षन्तमिव प्रजाः ॥ ८ ॥
संक्रुद्धं केशवं दृष्ट्वा पूर्वदेहेषु फाल्गुनः ।
कीर्तयामास कर्माणि सत्यकीर्तेर्महात्मनः ॥ ९ ॥
पुरुषस्याऽप्रमेयस्य सत्यस्याऽमिततेजसः ।
प्रजापतिपतेर्विष्णोर्लोकनाथस्य धीमतः ॥ १० ॥

अर्जुन उवाच—दश वर्षसहस्राणि यत्र सायंगृहो मुनिः ।
व्यचरस्त्वं पुरा कृष्ण ! पर्वते गन्धमादने ॥ ११ ॥
दश वर्षसहस्राणि दश वर्षशतानि च ।

करके युधिष्ठिर के पास पहुँचे और उनके चारों ओर बैठ गये ॥१।४॥

उस समय श्रीकृष्ण ने व्याकुल होकर युधिष्ठिर से कहा-इस में कोई सन्देह नहीं, कि यह पृथ्वी पापी दुर्योधन, कर्ण, शकुनि और दुःशासन, इन चारों दुरात्माओं का लोहू पियेगी। हम सब लोग मिलकर उन चारों दुराचारियों को और उनके साथी राजाओं को युद्ध में जीतकर मारेंगे और तुम्हारा (धर्मराज युधिष्ठिर का) अभिषेक करेंगे। छल करनेवाले दुरात्माओं को मार डालना ही सनातन धर्म है ॥५।७॥

वैशम्पायन ने कहा—हे राजा जनमेजय ! उस समय श्रीकृष्ण जी को पाण्डवों के दुःख के कारण से क्रोधित देखकर, अर्जुन श्रीकृष्ण जी के क्रोध को शान्त करने के लिये उनके पूर्व जन्मों में किये हुए कर्मों का कीर्तन करने लगा—ये श्रीकृष्ण अप्रमेय, सत्यरूप, बड़े तेजस्वी, प्रजापति के स्वामी विष्णु, लोकनाथ और ज्ञानरूप थे। अर्जुन कहने लगा—हे श्रीकृष्ण जी ! पूर्व समय में आप मुनिरूप से गन्धमादन पर्वत पर दस हज़ार वर्ष तक इस प्रकार से विचरा करते थे, कि जहां सन्ध्या हो जाती थी, वहीं आप अपना घर समझते थे। फिर आप पुष्कर जी

पुष्करेष्ववसः कृष्ण ! त्वमपो भक्षयन्पुरा ॥ १२ ॥
ऊर्ध्वबाहुर्विशालायां बदर्यां मधुसूदन ! ।
अतिष्ठ एकपादेन वायुभक्षः शतं समाः ॥ १३ ॥
अवकृष्टोत्तरासङ्गः कृशो धमनिसन्ततः ।
आसीः कृष्ण ! सरस्वत्यां सत्रे द्वादशवार्षिके ॥ १४ ॥
प्रभासमप्यथाऽऽसाद्य तीर्थं पुण्यजनोचितम् ।
तथा कृष्ण ! महातेजा ! दिव्यं वर्षसहस्रकम् ।
आतिष्ठस्त्वं यथैकेन पादेन नियमास्थितः ॥ १५ ॥
लोकप्रवृत्तिहेतोस्त्वमिति व्यासो ममाऽब्रवीत् ।
क्षेत्रज्ञः सर्वभूतानामादिरन्तश्च केशव ! ॥ १६ ॥
निधानं तपसां कृष्ण ! यज्ञस्त्वं च सनातनः ।
निहत्य नरकं भौममाहृत्य मणिकुण्डले ।
प्रथमोत्पादितं कृष्ण ! मेध्यमश्वमवासृजः ॥ १७ ॥
कृत्वा* तत्कर्म लोकानामृषभः सर्वलोकजित् ।
अवधीस्त्वं रणे सर्वान्समेतान्दैत्यदानवान् ॥ १८ ॥
ततः सर्वेश्वरत्वं च संप्रदाय शचीपतेः ।

में ग्यारह हज़ार वर्ष तक केवल जल पीकर रहे॥८।१२॥

इसके पश्चात् आपने एक पाव से खड़े होकर, बदरिकाश्रम में सौ वर्ष तक ऊपर को हाथ किये हुए केवल वायुभक्षी रहकर तपस्या की। हे श्रीकृष्ण! फिर आपने सरस्वती नदी के किनारे बारह वर्ष के यज्ञ में अपने शरीर को लटकाकर और निर्मांस करके, उत्तरीय वस्त्र त्यागकर तपस्या की। उपरान्त आपने प्रभास नाम तीर्थ में नियमपूर्वक एक पाँव से खड़े रहकर, हज़ार वर्ष तक तपस्या की। हमने व्यास जी के मुख से सुना है, कि आप ही लोकसञ्चालन के लिये एकमात्र कारण हैं। हे श्रीकृष्ण जी! आप क्षेत्रज्ञ और सब तत्त्वों तथा प्राणियों के आदि भी हैं, अन्त भी हैं। हे श्रीकृष्ण! आप तपस्या के आधार और नित्य-यज्ञस्वरूप हैं। हे अच्युत! आपने भूमिपुत्र नरकासुर को मार करके मणिमय कुण्डलों को ग्रहण किया है और प्राथमिक पवित्र अश्व की सृष्टि की है॥१३।१७॥

आप तीनों लोकों में सब से श्रेष्ठ और सब लोकों को जय करनेवाले हैं। आपने इन सब कार्यों को पूरा करने के पश्चात, युद्ध में दुष्ट दानवों को मारकर, इन्द्र को सबका ईश्वर बनाया है। हे महाबाहो! आप शरीर धारण कर मनुष्यलोक में भी प्रकट हुए हैं। हे परन्तप! तुम्हीं नारायण हो, तुम्हीं

* भूतादरकारेण प्रथमेन अश्वोत्सर्गरूप कर्म कृत्वा इत्यर्थः ।

मानुषेषु महाबाहो ! प्रादुर्भूतोऽसि केशव ! ॥ १९ ॥
स त्वं नारायणो भूत्वा हरिरासीः परन्तप ! ।
ब्रह्मा सोमश्च सूर्यश्च धर्मो धाता यमोऽनलः ॥ २० ॥
वायुर्वैश्रवणो रुद्रः कालः खं पृथिवी दिशः ।
अजश्चराचरगुरुः स्रष्टा त्वं पुरुषोत्तम ! ॥ २१ ॥
परायणं देवमूर्धा क्रतुभिर्मधुसूदन ! ।
अयजो भूरितेजा वै कृष्ण ! चैत्ररथे वने ॥ २२ ॥
शतं शतसहस्राणि सुवर्णस्य जनार्दन ! ।
एकैकस्मिंस्तदा यज्ञे परिपूर्णानि दत्तवान् ॥ २३ ॥
अदितेरपि पुत्रत्वमेत्य यादवनन्दन ! ।
त्वं विष्णुरिति विख्यात इन्द्रादवरजो विभुः ॥ २४ ॥
शिशुर्भूत्वा दिवं खं च पृथिवीं च परन्तप ! ।
त्रिभिर्विक्रमणैः कृष्ण ! क्रान्तवानसि तेजसा ॥ २५ ॥
संप्राप्य दिवमाकाशमादित्यसदने स्थितः ।
अत्यरोचश्च भूतात्मन् ! भास्करं स्वेन तेजसा ॥ २६ ॥
प्रादुर्भावसहस्रेषु तेषु तेषु त्वया विभो ! ।
अधर्मरुचयः कृष्ण ! निहताः शतशोऽसुराः ॥ २७ ॥

हरि हो, तुम्हीं ब्रह्मा हो, तुम्हीं चन्द्रमा हो, तुम्हीं सूर्य हो, तुम्हीं धर्म हो, तुम्हीं धाता हो, तुम्हीं यम हो, तुम्हीं अग्नि हो, तुम्हीं वायु हो, तुम्हीं कुबेर हो, तुम्हीं रुद्र हो, तुम्हीं काल हो, तुम्हीं आकाश हो, तुम्हीं पृथ्वी हो, तुम्हीं दस दिशा हो, तुम्हीं अज हो, तुम्हीं चर अचर के गुरु हो, और तुम्हीं स्रष्टा अर्थात् दक्ष प्रजापति आदि सृष्टि के करनेवाले हो ॥१८।२१॥

हे मधुसूदन ! तुम्हीं ने चैत्ररथ वन में अनेक यज्ञ करके देवताओं की पूजा की है। हे जनार्दन! तुम्हीं ने यथायोग्य भाग के अनुसार प्रत्येक यज्ञ में शत-सहस्र सुवर्ण दक्षिणा में दिये हैं। हे यादव-नन्दन ! तुम्हीं अदिति के गर्भ से जन्म लेकर इन्द्र के छोटे भाई विष्णु कहलाये हो। हे शत्रु-दमन ! तुम्हीं ने वामन स्वरूप धारण कर स्वर्ग, आकाश और पृथ्वी को अपने तेज से तीन पग में अन्तर्गत कर लिया है। तुम्हीं ने स्वर्ग और आकाश को प्राप्त करके सूर्यलोक में सूर्यमण्डल को अपने तेज से सुशोभित किया है ॥२२।२६॥

तुम्हीं ने हजारों अवतार लेकर सैकड़ों दैत्यों का, जो अधर्मी थे, नाश किया। तुम्हीं ने तांत की बनी हुई पाशों को काटकर, निसुंद और नरक

सादिता मौरवाः* पाशा निसुन्दनरकौ हतौ ।
कृतः क्षेमः पुनः पन्थाः पुरं प्राग्ज्योतिषं प्रति ॥ २८ ॥
जारूथ्यामाहृतिः क्राथः शिशुपालो जनैः सह ।
जरासन्धश्च शैब्यश्च शतधन्वा च निर्जितः ॥ २९ ॥
तथा पर्जन्यघोषेण रथेनाऽऽदित्यवर्चसा ।
अवाप्सीर्महिषीं भोज्यां रणे निर्जित्य रुक्मिणम् ॥ ३० ॥
इन्द्रद्युम्नो हतः कोपाद्यवनश्च कसेरुमान् ।
हतः सौभपतिः शाल्वस्त्वया सौभं च पातितम् ॥ ३१ ॥
एवमेते युधि हता भूयश्चाऽन्याञ्छृणुष्व ह ।
इरावत्यां हतो भोजः कार्तवीर्यसमो युधि ।
गोपतिस्तालकेतुश्च त्वया विनिहतावुभौ ॥ ३२ ॥
तां च भोगवतीं पुण्यामृषिकान्तां जनार्दन ! ।
द्वारकामात्मसात्कृत्वा समुद्रं गमयिष्यसि ॥ ३३ ॥
न क्रोधो न च मात्सर्यं नाऽनृतं मधुसूदन ! ।
त्वयि तिष्ठति दाशार्ह ! न नृशंस्यं कुतोऽनृजु ॥ ३४ ॥
आसीनं चैत्यमध्ये त्वां दीप्यमानं स्वतेजसा ।

नाम के दैत्यों को मारा और प्राग्ज्योतिष नाम नगर की राह निष्कंटक कर दी । तुम्हीं ने जारूथी नाम की नगरी में आहृति, क्राथ, शिशुपाल, जरासंध, शैव्य, और शतधन्वा आदिकों को विजय किया था ॥२७।२९॥

मेघ के समान शब्द और सूर्य के समान प्रकाश-वाले रथ पर चढ़कर, समर में रुक्मी को हराकर, तुम्हीं ने भोजराज–कुमारी रुक्मिणी को अपनी स्त्री बनाया है । तुम्हीं ने क्रोधित होकर कसेरुमान्, यवन, इन्द्रद्युम्न, सौभपति शाल्व और सौभ विमान को नष्ट किया था । तुम्हीं ने इरावती नगरी में सहस्रबाहु अर्जुन के समान वीर्यशाली भोजराज, तालकेतु और गोपति को मारा था । तुम्हीं ने इस द्वारकापुरी को, जो भोगवती, पुण्यस्थान और ऋषिक पर्वत के समीप बसती है, अपनी आत्मा के स्वरूप में मिला लिया है और वह समुद्र में ही लोप हो जायगी । तुम क्रोधी, झूठे, निर्दयी और कुटिल नहीं हो ॥३०।३४॥

ऋषि लोग अपने हृदय में अपने तेज से दीप्त और विराजमान् तुमको ध्यान करके, अभय रहते

* 'मुर वेष्टने' धातोरौणादिक उक्प्रत्यये तत इदमर्थे ताद्धितोऽणप्रत्यय.। मौरवा आन्वनन्ति-मया इत्यर्थः । मोर्वीशब्दे ऽप्येवं बोध्यम् । मध्यमस्वरलोपो विशेषः ।

आगम्य ऋषयः सर्वेऽयाचन्ताऽभयमच्युत ! ॥ ३५ ॥
युगान्ते सर्वभूतानि संक्षिप्य मधुसूदन ! ।
आत्मनैवाऽऽत्मसात्कृत्वा जगदासीः परन्तप ! ॥ ३६ ॥
युगादौ तव वार्ष्णेय ! नाभिपद्मादजायत ।
ब्रह्मा चराचरगुरुर्यस्येदं सकलं जगत् ॥ ३७ ॥
तं हन्तुमुद्यतौ घोरौ दानवौ मधुकैटभौ ।
तयोर्व्यतिक्रमं दृष्ट्वा क्रुद्धस्य भवतो हरेः ॥ ३८ ॥
ललाटाज्जातवाञ्छम्भुः शूलपाणिस्त्रिलोचनः ।
इत्थं तावपि देवेशौ त्वच्छरीरसमुद्भवौ ॥ ३९ ॥
त्वन्नियोगकरावेताविति मे नारदोऽब्रवीत् ।
तथा नारायण ! पुरा क्रतुभिर्भूरिदक्षिणैः ॥ ४० ॥
इष्टवांस्त्वं महासत्रं कृष्ण ! चैत्ररथे वने ।
नैवं पूर्वे नाऽपरे वा करिष्यन्ति कृतानि वा ॥ ४१ ॥
यानि कर्माणि देव ! त्वं बाल एव महाबलः ।
कृतवान्पुण्डरीकाक्ष ! बलदेवसहायवान् ।
कैलासभवने चापि ब्राह्मणैर्न्यवसः सह ॥ ४२ ॥
वैशम्पायन उवाच–एवमुक्त्वा महात्मानमात्मा कृष्णस्य पाण्डवः ।

हैं। हे मधुसूदन ! तुम्हीं युग के अन्त में बिना निमित्त सब जीवों को अपनी आत्मा में लय करके, जगत् स्वरूप हो जाते हो और युग के आदि में तुम्हारी ही नाभि में उत्पन्न हुए कमल से ब्रह्मा जी, जो सब जगत् के कर्त्ता और सब जड़ और चैतन्य के गुरु हैं, प्रकट होते हैं। मधु और कैटभ नाम के दोनों मदान्ध असुर, जब ब्रह्मा को मारने के लिये उद्यत हुए थे, तब उनके इस दुर्भाव को देखकर तुम्हें क्रोध चढ़ आया था और तुमने अपने ललाट से शूलपाणि त्रिलोचन शम्भु को उत्पन्न किया था। महर्षि नारद ने मुझसे कहा है, कि तुम्हारे कार्यों को सिद्ध करने के लिये ब्रह्मा और शम्भु दोनों इसी तरह तुम्हारे शरीर से उत्पन्न हुए हैं ॥३५।३९॥

हे श्रीकृष्ण ! तुम्हीं ने पूर्व समय में चैत्ररथ वन में महासत्र यज्ञ किया था, जिसमें बड़ी बड़ी दक्षिणाएँ दी गई थीं। ऐसा यज्ञ देवता और मनुष्यों में कोई नहीं कर सकता है। बाल्यावस्था में भी तुमने बलदेव जी की सहायता से बड़े बड़े अद्भुत काम किये थे। तुम कैलास भवन में भी ब्राह्मणों के साथ रहते रहे हो ॥४०।४२॥

वैशम्पायन ने कहा–हे राजा जनमेजय ! अर्जुन उक्त प्रकार से श्रीकृष्ण जी की स्तुति करके चुप

तूष्णीमासीत्ततः पार्थमित्युवाच जनार्दनः ॥ ४३ ॥
ममैव त्वं तवैवाऽहं ये मदीयास्तवैव ते ।
यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु ॥ ४४ ॥
नरस्त्वमसि दुर्धर्ष ! हरिर्नारायणो ह्यहम् ।
काले लोकमिमं प्राप्तौ नरनारायणावृषी ॥ ४५ ॥
अनन्यः पार्थ मत्तस्त्वं त्वत्तश्चाऽहं तथैव च ।
नाऽऽवयोरन्तरं शक्यं वेदितुं भरतर्षभ ! ॥ ४६ ॥
वैशम्पायन उवाच—एवमुक्ते तु वचने केशवेन महात्मना ।
तस्मिन्वीर-समावाये संरब्धेष्वथ राजसु ॥ ४७ ॥
धृष्टद्युम्नमुखैर्वीरैर्भ्रातृभिः परिवारिता ।
पाञ्चाली पुण्डरीकाक्षमासीनं भ्रातृभिः सह ॥ ४८ ॥
अभिगम्याऽब्रवीत्क्रुद्धा शरण्यं शरणैषिणी ।
द्रौपद्युवाच—पूर्वे प्रजाऽभिसर्गे त्वामाहुरेकं प्रजापतिम् ॥ ४९ ॥
स्रष्टारं सर्वलोकानामसितो देवलोऽब्रवीत् ।
विष्णुस्त्वमसि दुर्धर्ष ! त्वं यज्ञो मधुसूदन ! ॥ ५० ॥
यष्टा त्वमसि यष्टव्यो जामदग्न्यो यथाऽब्रवीत् ।
ऋषयस्त्वां क्षमामाहुः सत्यं च पुरुषोत्तम ! ।

हो रहा। उस समय श्रीकृष्ण जी कहने लगे—हे अर्जुन ! तुम मेरे हो और मैं तुम्हारा हूँ। जो कुछ मेरा है उसपर तुम्हारा अधिकार है। जो लोग तुमसे शत्रुता या मित्रता रखते हैं, वे मेरे भी शत्रु और मित्र हैं। तुम नर हो, मैं नारायण हूँ। हम देवकार्य के कारण नर और नारायण ऋषि के रूप से मनुष्य-लोक में प्रकट हुए हैं। हम में परस्पर कुछ भी भेद नहीं है। हमारे अन्त को भी कोई नहीं जान सकता ॥४३।४६॥

वैशम्पायन ने कहा—हे राजा जनमेजय ! श्रीकृष्ण जी की बात को सुनकर वह द्रौपदी, जो क्रोध में भरी हुई अपने वीर भाइयों के बीच में बैठी हुई थी, शरण जाने की इच्छा से श्रीकृष्ण जी के पास, जो शरण के योग्य थे, गई और कहने लगी—हे श्रीकृष्ण ! मैंने असित और देवल ऋषियों के मुख से सुना है, कि आप प्रजापति प्रथम पुरुष और जगत्-कर्त्ता हैं। हे मधुसूदन ! परशुराम जी ने आप को विष्णु अर्थात् सर्वव्यापी, यज्ञ, यज्ञ का करनेवाला और पूजन योग्य कहा है। हे पुरुषोत्तम ! कश्यप जी आप को क्षमा, सत्य और सत्य से उत्पन्न यज्ञ कहते हैं। मैंने नारद जी से सुना है, कि आप आकाश आदि पांचों तत्त्व के उत्पन्न करनेवाले और

सत्याद्यज्ञोऽसि संभूतः कश्यपस्त्वां यथाऽब्रवीत् ॥ ५१ ॥
साध्यानामपि देवानां शिवानामीश्वरेश्वर ! ।
भूतभावन ! भूतेश ! यथा त्वां नारदोऽब्रवीत् ॥ ५२ ॥
ब्रह्मशंकरशक्राद्यैर्देववृन्दैः पुनः पुनः ।
क्रीडसे त्वं नरव्याघ्र ! बालः क्रीडनकैरिव ॥ ५३ ॥
द्यौश्च ते शिरसा व्याप्ता पद्भ्यां च पृथिवी प्रभो ! ।
जठरं त इमे लोकाः पुरुषोऽसि सनातनः ॥ ५४ ॥
विद्यातपोऽभितप्तानां तपसा भावितात्मनाम् ।
आत्मदर्शनतृप्तानामृषीणामसि सत्तमः ॥ ५५ ॥
राजर्षीणां पुण्यकृतामाहवेष्वनिवर्तिनाम् ।
सर्वधर्मोपपन्नानां त्वं गतिः पुरुषर्षभ ! ।
त्वं प्रभुस्त्वं विभुश्च त्वं भूतात्मा त्वं विचेष्टसे ॥ ५६ ॥
लोकपालाश्च लोकाश्च नक्षत्राणि दिशो दश ।
नभश्चन्द्रश्च सूर्यश्च त्वयि सर्वं प्रतिष्ठितम् ॥ ५७ ॥
मर्त्यता चैव भूतानाममरत्वं दिवौकसाम् ।
त्वयि सर्वं महाबाहो ! लोककार्यं प्रतिष्ठितम् ॥ ५८ ॥
सा तेऽहं दुःखमाख्यास्ये प्रणयान्मधुसूदन ! ।

सब प्राणी, साध्यगण, देवता और ग्यारह रुद्रों के भी ईश्वर हैं ॥४७।५२॥

हे पुरुषसिंह ! आप ब्रह्मा, शङ्कर और इन्द्र आदि देवताओं को उत्पन्न करके इस प्रकार से उनके साथ क्रीडा करते हैं, जैसे बालक खिलौनों से खेलता है । आप सनातन हैं । आपके मस्तक से सारा स्वर्ग और दोनों पैरों से पृथ्वी व्याप्त है । सब चराचर जगत आपके पेट में है । जो ऋषि विद्यावान् तपस्वी शुद्ध-चित्त और आत्मदर्शी हैं, उनके निकट आपही सत्य हैं । आप पुण्यकर्म करनेवाले, युद्ध में न रुकनेवाले, सब धर्मों के ज्ञाता और प्रतिपालक, राजर्षियों के अद्वितीय आश्रय हैं । आप प्रभु, विभु, भूतात्मा और सर्वत्र विचरणशील हैं ॥५३।५६॥

लोकपाल, सब लोक, नक्षत्र, दसों दिशाएँ, आकाश, चन्द्रमा और सूर्य सब आप ही के अन्तर्गत हैं । और सब देवताओं का अमर होना, मनुष्यों का मरना और सब लोकों का कार्य होना, आप ही की इच्छा के अनुसार है । हे कृष्ण ! आप दिव्य और मानुष, सभी प्राणियों के ईश्वर हैं । इसलिये स्नेहवश मैं आपसे अपना दुःख कहती हूँ । मैं धृष्टद्युम्न की बहन पाण्डवों की भार्या और आपकी स्नेह-पात्र होकर भी भरी सभा में खींचकर लाई गई ।

ईशस्त्वं सर्वभूतानां ये दिव्या ये च मानुषाः ॥ ५९ ॥
कथं नु भार्या पार्थानां तव कृष्ण ! सखी विभो ! ।
धृष्टद्युम्नस्य भगिनी सभां कृष्येत मादृशी ? ॥ ६० ॥
स्त्रीधर्मिणी वेपमाना शोणितेन समुक्षिता ।
एकवस्त्रा विकृष्टाऽस्मि दुःखिता कुरुसंसदि ॥ ६१ ॥
राज्ञां मध्ये सभायां तु रजसाऽतिपरिप्लुता ।
दृष्ट्वा च मां धार्तराष्ट्राः प्राहसन्पापचेतसः ॥ ६२ ॥
दासीभावेन मां भोक्तुमीषुस्ते मधुसूदन ! ।
जीवत्सु पाण्डुपुत्रेषु पाञ्चालेषु च वृष्णिषु ॥ ६३ ॥
नन्वहं कृष्ण ! भीष्मस्य धृतराष्ट्रस्य चोभयोः ।
स्नुषा भवामि धर्मेण साऽहं दासीकृता बलात् ॥ ६४ ॥
गर्हये पाण्डवांस्त्वेव युधि श्रेष्ठान्महाबलान् ।
यत्क्लिश्यमानां प्रेक्षन्ते धर्मपत्नीं यशस्विनीम् ॥ ६५ ॥
धिग्बलं भीमसेनस्य धिक्पार्थस्य च गाण्डिवम् ।
यौ मां विप्रकृतां क्षुद्रैर्मर्षयेतां जनार्दन ! ॥ ६६ ॥
शाश्वतोऽयं धर्मपथः सद्भिराचरितः सदा ।

क्या यह ठीक हुआ ? काँपती हुई, रजस्वला, केवल एक वस्त्र पहने और वस्त्र पर मासिक धर्म के रक्त के दाग रखनेवाली मुझको दुःशासन सहज ही सभा में राजाओं के बीच में खींच लाया। दुर्मति धृतराष्ट्र के पुत्र, मुझे उस दशा में देखकर, हँस पड़े ॥५७।६२॥

हे मधुसूदन ! पाञ्चाल, वृष्णि और पाण्डवों के जीते रहने भी दुष्टों ने दासीभाव से मेरा उपभोग करने की इच्छा प्रकट की। मैं धर्म के अनुसार धृतराष्ट्र और भीष्म की पुत्रवधू हूँ। तो भी दुष्ट दुःशासन आदि बलपूर्वक मुझे दासी बनाने के लिये उद्यत हुए ॥६३।६४॥

मैं इन पराक्रमी पाण्डवों की निन्दा करती हूँ। इन्होंने यशस्विनी धर्मपत्नी को इस प्रकार से कष्ट पाते और अपमानित होते देखकर भी उपेक्षा की। अर्जुन के इस गाण्डीव धनुष और भीमसेन के बल को धिक्कार है; क्योंकि दुष्टों के द्वारा मेरा अपमान होते देखकर भी इन्होंने उसे चुपचाप सह लिया। जो कोई थोड़ा सा भी पराक्रम रखता है वह भी अपनी स्त्री की रक्षा करता है। यह धर्म सनातन है और सत्पुरुषों ने सदैव से ऐसा ही किया है। क्योंकि स्त्री के रक्षित रहने पर सन्तान की रक्षा होती है और सन्तान के रक्षित रहने से अपनी आत्मा की रक्षा होती है। स्त्री पति की आत्मा कहलाती है,

यद्भार्यां परिरक्षन्ति भर्तारोऽल्पबला अपि ॥ ६७ ॥
भार्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता ।
प्रजायां रक्ष्यमाणायामात्मा भवति रक्षितः ॥ ६८ ॥
आत्मा हि जायते तस्यां तस्माज्जाया भवत्युत ।
भर्ता च भार्यया रक्ष्यः कथं जायान्ममोदरे ॥ ६९ ॥
नन्विमे शरणं प्राप्तं न त्यजन्ति कदाचन ।
ते मां शरणमापन्नां नाऽन्वपद्यन्त पाण्डवाः ॥ ७० ॥
पञ्चभिः पतिभिर्जाताः कुमारा मे महौजसः ।
एतेषामप्यवेक्षार्थं त्रातव्याऽस्मि जनार्दन ! ॥ ७१ ॥
प्रतिविन्ध्यो युधिष्ठिरात्सुतसोमो वृकोदरात् ।
अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥ ७२ ॥
कनिष्ठाच्छ्रुतकर्मा च सर्वे सत्यपराक्रमाः ।
प्रद्युम्नो यादृशः कृष्ण ! तादृशास्ते महारथाः ॥ ७३ ॥
नन्विमे धनुषि श्रेष्ठा अजेया युधि शात्रवैः ।
किमर्थं धार्तराष्ट्राणां सहन्ते दुर्बलीयसाम् ॥ ७४ ॥
अधर्मेण हृतं राज्यं सर्वे दासाः कृतास्तथा ।

---

क्योंकि पति स्त्री के उदर में पुत्ररूप से जन्म लेता है और स्त्री को भी पति की रक्षा करना इस विचार से उचित है, कि मेरा पति मेरे उदर में पुत्र रूप से जन्म लेगा ॥६५।६९॥

पाण्डव शरणागत को कभी विमुख नहीं करते, किन्तु मेरे शरणागत होने पर भी इन्होंने मेरी प्रार्थना पर ध्यान नहीं दिया। देखो, युधिष्ठिर आदि पांचों पाण्डवों द्वारा मेरे गर्भ से प्रतिविन्ध्य, सुतसोम, श्रुतकीर्त्ति, शतानीक, श्रुतकर्मा, ये पांच तेजस्वी और महाबली पुत्र उत्पन्न हुए हैं। इनके कारण से तो मेरी रक्षा करना पाण्डवों को अवश्य उचित था। यह प्रतिविन्ध्य युधिष्ठिर से, यह सुतसोम भीमसेन से, यह श्रुतकीर्त्ति अर्जुन से, यह शतानीक, नकुल से, और यह श्रुतकर्मा सहदेव से उत्पन्न हैं। हे श्रीकृष्ण जी! मेरे ये पांचों पुत्र प्रद्युम्न के समान महारथी हैं ॥७०।७३॥

धनुर्विद्या में इन पांचों का अभ्यास श्रेष्ठ है और शत्रु इनको नहीं जीत सकता है। परन्तु न जाने ये किसलिये दुर्बल दुर्योधन आदि के किये अपमान को सह रहे हैं! हाय! उन धृतराष्ट्र के पुत्रों ने अधर्म से सब राज्य लेकर सब को दास कर लिया और मुझ रजस्वला एक वस्त्र पहने हुई को सभा में खींच ले गये। जिस गाण्डीव धनुष को अर्जुन, भीमसेन और आपके सिवा और कोई नहीं

सभायां परिकृष्टाऽहमेकवस्त्रा रजस्वला ॥ ७५ ॥
नाऽधिज्यमपि यच्छक्यं कर्तुमन्येन गाण्डिवम् ।
अन्यत्राऽर्जुन-भीमाभ्यां त्वया वा मधुसूदन! ॥ ७६ ॥
धिग्बलं भीमसेनस्य धिक्पार्थस्य च पौरुषम् ।
यत्र दुर्योधनः कृष्ण! मुहूर्तमपि जीवति ॥ ७७ ॥
कालः सृजति भूतानि कालः संहरते प्रजाः ।
तत्कालेन कृतं मन्ये न तु पौरुषवर्धनम् ॥ ७८ ॥
य एतानाक्षिपद्राष्ट्रात्सह मात्राऽविहिंसकान् ।
अधीयानान्पुरा बालान्व्रतस्थान्मधुसूदन! ॥ ७९ ॥
भोजने भीमसेनस्य पापः प्राक्षेपयद्विषम् ।
कालकूटं नवं तीक्ष्णं संभृतं लोमहर्षणम् ॥ ८० ॥
तज्जीर्णमविकारेण सहाऽन्नेन जनार्दन! ।
सशेषत्वान्महाबाहो! भीमस्य पुरुषोत्तम! ॥ ८१ ॥
प्रमाणकोट्यां विश्वस्तं तथा सुप्तं वृकोदरम् ।
बद्ध्वैनं कृष्ण! गङ्गायां प्रक्षिप्य पुरमाव्रजत् ॥ ८२ ॥
यदा विबुद्धः कौन्तेयस्तदा संछिद्य बन्धनम् ।
उदतिष्ठन्महाबाहुर्भीमसेनो महाबलः ॥ ८३ ॥

चढ़ा सकता है वह धनुष अब कहां गया! हे श्रीकृष्ण जी! भीमसेन के पराक्रम को और अर्जुन के पौरुष को धिक्कार है, क्योंकि दुरात्मा दुर्योधन, जिसे क्षणभर जीना न चाहिए था, अब तक जीता है ॥७४।७७॥

इसी दुष्ट ने इन पाण्डवों को बालकपन में, जब वे विद्या ही पढ़ते थे, माता-सहित देश से बाहर निकाल दिया था और इसी ने भोजन में कालकूट विष मिलाकर भीमसेन को खिलाया था। परन्तु आयुर्बल विशेष होने के कारण से, वह विष अन्न के साथ पच गया ॥७८।८१॥

इसके सिवा प्रमाण नामक जो एक बरगद का पेड़ गङ्गा-तट पर है, वहां विश्वास-पूर्वक बेखटके सोते हुए भीमसेन को बांधकर, उस दुष्ट ने जल में डुबा दिया और आप नगर को लौट पड़ा। महाबाहु भीम जब जागे, तब बन्धन तोड़कर, जल से निकलकर चले आये। उस पापी ने भीमसेन को निद्रा में तीक्ष्ण विषवाले सांपों से कटवाया; किन्तु उससे भी भीमसेन की मृत्यु नहीं हुई। जब भीमसेन की मूर्च्छा टूटी, तब भीमसेन ने उन सांपों को मार डाला और उस दुष्ट के प्यारे सारथी को उल्टे हाथ के थप्पड़ से मारा। इसके पश्चात् एक दिन

आशीविषैः कृष्णसर्पैर्भीमसेनमदंशयत् ।
सर्वेष्वेवाऽङ्गदेशेषु न ममार च शत्रुहा ॥ ८४ ॥
प्रतिबुद्धस्तु कौन्तेयः सर्वान्सर्पानपोथयत् ।
सारथिं चाऽस्य दयितमपहस्तेन जघ्निवान् ॥ ८५ ॥
पुनः सुप्तानुपाधाक्षीद्बालकान्वारणावते ।
शयानानार्यया सार्धं को नु तत्कर्तुमर्हति ? ॥ ८६ ॥
यत्राऽऽर्या रुदती भीता पाण्डवानिदमब्रवीत् ।
महद्व्यसनमापन्ना शिखिना परिवारिता ॥ ८७ ॥
हा ! हताऽस्मिकुतोन्वद्य भवेच्छान्तिरिहाऽनलात् ।
अनाथा विनशिष्यामि बालकैः पुत्रकैः सह ॥ ८८ ॥
तत्र भीमो महाबाहुर्वायुवेगपराक्रमः ।
आर्यामाश्वासयामास भ्रातृंश्चापि वृकोदरः ॥ ८९ ॥
वैनतेयो यथा पक्षी गरुत्मान्पततां वरः ।
तथैवाऽभिपतिष्यामि भयं वो नेह विद्यते ॥ ९० ॥
आर्यामङ्केन वामेन राजानं दक्षिणेन च ।
अंसयोश्च यमौ कृत्वा पृष्ठे बीभत्सुमेव च ॥ ९१ ॥
सहसोत्पत्य वेगेन सर्वानादाय वीर्यवान् ।

वारणावत नगर में कुन्ती-सहित पांचों पाण्डव लाक्षा-गृह में सोये हुए थे, पापी दुर्योधन ने पाण्डवों को जलाने के विचार से पुरोचन के हाथों उसमें आग लगवा दी। हे मधुसूदन ! कौन पुरुष ऐसा घृणित कर्म कर सकता है ? ॥८२।८६॥

कुन्ती माता उस आग को देख अपने को सङ्कट में पड़ी हुई जानकर व्याकुल हृदय से 'हाय मुझे मार डाला' कहकर रोने लगी। वह कहने लगी— इस अग्नि से अब किस तरह बचाव हो। आज मैं अनाथ की तरह बालकों के साथ यहीं जलकर मर जाऊँगी। उस समय भीमसेन ने जिसका पराक्रम वायु के समान है, अपने चारों भाइयों और माता को धैर्य दिया और कहा- तुम लोग बिलकुल न डरो। मैं तुम सब को लेकर गरुड़ के समान उछल कर इस अग्नि से बाहर ले चलूँगा ॥८७।९०॥

और फिर बांईं गोद में अपनी माता को, दाहिनी में युधिष्ठिर को, दोनों कन्धों पर नकुल और सहदेव को और पीठ पर अर्जुन को चढ़ा लिया और अकस्मात् उछल कर बाहर निकल आया और सबको अग्नि से बचा लिया। यशस्वी पाण्डव रात्रि को ही माता-सहित चल कर महावन हिडिम्ब-कानन में पहुँचे। वहां पर थकावट के कारण से ये चारों भाई

भ्रातृनार्यां च वलवान्मोक्षयामास पावकात् ॥ ९२ ॥
ते रात्रौ प्रस्थिताः सर्वे सह मात्रा यशस्विनः ।
अभ्यगच्छन्महारण्ये हिडिम्बवनमन्तिकात् ॥ ९३ ॥
श्रान्ताः प्रसुप्तास्तत्रेमे मात्रा सह सुदुःखिताः ।
सुप्तांश्चैनानभ्यगच्छद्धिडिम्बा नाम राक्षसी ॥ ९४ ॥
सा दृष्ट्वा पाण्डवांस्तत्र सुप्तान्मात्रा सह क्षितौ ।
हृच्छयेनाऽभिभूतात्मा भीमसेनमकामयत् ॥ ९५ ॥
भीमस्य पादौ कृत्वा तु स्व उत्सङ्गे ततोऽवला ।
पर्यमर्दत संहृष्टा कल्याणी मृदुपाणिना ॥ ९६ ॥
तामवुध्यदमेयात्मा वलवान्सत्यविक्रमः ।
पर्यपृच्छत तां भीमः किमिहेच्छस्यनिन्दिते ! ॥ ९७ ॥
एवमुक्ता तु भीमेन राक्षसी कामरूपिणी ।
भीमसेनं महात्मानमाह चैवमनिन्दिता ॥ ९८ ॥
पलायध्वमितः क्षिप्रं मम भ्रातैष वीर्यवान् ।
आगमिष्यति वो हन्तुं तस्माद्गच्छत मा चिरम् ॥ ९९ ॥
अथ भीमोऽभ्युवाचैनां साभिमानमिदं वचः ।
नोद्विजेयमहं तस्मान्निहनिष्येऽहमागतम् ॥१००॥
तयोः श्रुत्वा तु संजल्पमागच्छद्राक्षसाधमः ।
भीमरूपो महानादान्विसृजन्भीमदर्शनः ॥ १०१ ॥

माता-सहित सो गये। उस समय इनके पास हिडिम्बा नाम राक्षसी आई और भीमसेन के स्वरूप को देख-कर कामासक्त हो गई। भीमसेन पर अनुराग हो जाने से वह राक्षसी, उनके चरणों को गोद में रख-कर, अपने कोमल हाथों से दबाने लगी ॥९३।९६॥

उस समय इन पराक्रमी और बुद्धिमान् भीम-सेन ने उस राक्षसी से पूछा हे सुन्दरी ! तुम क्या चाहती हो! तब उस अनुपम लावण्यवती काम-रूपिणी राक्षसी ने भीमसेन के यों पूछने पर, कहा—हे पुरुषश्रेष्ठ ! मेरा वीर्य-मद से उन्मत्त, दुराचारी भाई तुम को मारने के लिये अभी आता होगा। इससे तुम शीघ्र यहां से भागो। यह सुनकर भीम-सेन ने गर्व के साथ कहा—हे सुन्दरी ! मैं तुम्हारे भाई से बिलकुल नहीं डरता। यहां आते ही वह मेरे हाथ से मारा जायगा ॥९७।१००॥

राक्षसाधम हिडिम्ब उनकी इस बात-चीत को

राक्षस उवाच—केन सार्धं कथयसि आनयैनं ममाऽन्तिकम् ।
हिडिम्बे ! भक्षयिष्यामो न चिरं कर्तुमर्हसि ॥ १०२ ॥
सा कृपासंगृहीतेन हृदयेन मनस्विनी ।
नैनमैच्छत्तदाख्यातुमनुक्रोशादनिन्दिता ॥ १०३ ॥
स नादान्विनदन्घोरान्राक्षसः पुरुषादकः ।
अभ्यद्रवत वेगेन भीमसेनं तदा किल ॥ १०४ ॥
तमभिद्रुत्य संक्रुद्धो वेगेन महता वली ।
अगृह्णात्पाणिना पाणिं भीमसेनस्य राक्षसः ॥ १०५ ॥
इन्द्राशनिसमस्पर्शं वज्रसंहननं दृढम् ।
संहत्य भीमसेनाय व्याक्षिपत्सहसा करम् ॥ १०६ ॥
गृहीतं पाणिना पाणिं भीमसेनस्य रक्षसा ।
नाऽमृष्यत महावाहुस्तत्राऽक्रुध्यद् वृकोदरः ॥ १०७ ॥
तदासीत्तुमुलं युद्धं भीमसेनहिडिम्बयोः ।
सर्वास्त्रविदुषोर्घोरं वृत्रवासवयोरिव ॥ १०८ ॥
विक्रीड्य सुचिरं भीमो राक्षसेन सहाऽनघ ! ।
निजघान महावीर्यस्तं तदा निर्वलं वली ॥ १०९ ॥
हत्वा हिडिम्बं भीमोऽथ प्रस्थितो भ्रातृभिः सह ।
हिडिम्बामग्रतः कृत्वा यस्यां जातो घटोत्कचः ॥ ११० ॥

सुनकर गरजता हुआ वहां आ पहुंचा । वहां आकर उसने कहा—अरी हिडिम्बा ! तू किस से बातें कर रही है ! इस पुरुष को मेरे पास तुरन्त ले आ । मैं इसका मांस खाऊँगा । अब तुझे विलम्ब न करना चाहिए ॥१०१।१०२॥

सर्वाङ्ग सुन्दरी हिडिम्बा के मन में करुणा का भाव भर आया था । वह चुपचाप बैठी रही । तब मनुष्य-मांस-लोभी दुराचारी हिडिम्ब ज़ोर से चिल्लाता हुआ भीमसेन की ओर लपका । क्रोध के आवेश में वेग से जाकर, उस राक्षस ने भीमसेन का हाथ पकड़ लिया और अपने कठोर स्पर्शवाले सुदृढ़ हाथ से एकाएक उनके ऊपर प्रहार किया । राक्षस ने जब हाथ पकड़ कर यों प्रहार किया, तब महाबाहु भीमसेन क्रोध के मारे प्रज्वलित हो उठे ॥१०३।१०७॥

फिर वृत्रासुर और इन्द्र के समान, सब अस्त्रों में निपुण हिडिम्ब और भीम का भयङ्कर युद्ध होने लगा । हे श्रीकृष्ण ! भीमसेन ने बहुत देर तक उस राक्षस के साथ युद्ध किया । उपरान्त जब वह निर्बल हुआ, तब उसे मार डाला । हिडिम्ब को मार कर, घटोत्कच की माता हिडिम्बा को आगे करके, माता

ततः संप्राद्रवन्सर्वे सह मात्रा परन्तपाः ।
एकचक्रामभिमुखाः संवृता ब्राह्मणव्रजैः ॥ १११ ॥
प्रस्थाने व्यास एषां च मन्त्री प्रियहिते रतः ।
ततोऽगच्छन्नेकचक्रां पाण्डवाः संशितव्रताः ॥ ११२ ॥
तत्रोऽप्यासादयामासुर्बकं नाम महाबलम् ।
पुरुषादं प्रतिभयं हिडिम्बेनैव संमितम् ॥ ११३ ॥
तं चापि विनिहत्योग्रं भीमः प्रहरतां वरः ।
सहितो भ्रातृभिः सर्वैर्द्रुपदस्य पुरं ययौ ॥ ११४ ॥
लब्धाऽहमपि तत्रैव वसता सव्यसाचिना ।
यथा त्वया जिता कृष्ण रुक्मिणी भीष्मकात्मजा ॥ ११५ ॥
एवं सुयुद्धे पार्थेन जिताऽहं मधुसूदन ! ।
स्वयंवरे महत्कर्म कृत्वा न सुकरं परैः ॥ ११६ ॥
एवं क्लेशैः सुबहुभिः क्लिश्यमाना सुदुःखिता ।
निवसाम्यार्यया हीना कृष्ण ! धौम्यपुरःसरा ॥ ११७ ॥
त इमे सिंहविक्रान्ता वीर्येणाऽभ्यधिकाः परैः ।
निर्हीनैः परिक्लिश्यन्तीं समुपेक्षन्ति मां कथम् ॥ ११८ ॥
एतादृशानि दुःखानि सहन्ती दुर्बलीयसाम् ।

और भाइयों के साथ भीमसेन वहां से चल दिये। इसके
उपरान्त शत्रुनाशन पाण्डव ब्राह्मणों के साथ एकचक्रा
नगरी की ओर चले। हितचिन्तक भगवान् वेदव्यास
भी मन्त्री की तरह इनके साथ थे ॥१०८।११२॥
पाण्डव लोग जब उस नगरी के पास पहुँचे, तब
हिडिम्ब के समान पराक्रमी बक नाम का भयानक
राक्षस देख पड़ा। भीमसेन उसे भी मारकर भाइयों के
साथ द्रुपद नरेश की नगरी की ओर चले। हे श्रीकृष्ण
जी! तुम जैसे राजा भीष्मक की कन्या रुक्मिणी को
ले आये थे, वैसे ही उक्त नगरी में रहते समय, महा-
वीर अर्जुन ने स्वयंवर में, औरों से न हो सकने
योग्य अद्भुत काम करके, आये हुए राजाओं को
परास्त करके, मुझको प्राप्त किया ॥११३।११६॥
हे जनार्दन ! इस तरह बहुत से क्लेश उठाती
हुई मैं, अब सास से बिछुड़ कर, आचार्य धौम्य के
साथ यहाँ रहती हूँ। मेरा हृदय दुःख और सन्ताप
से सर्वदा जलता रहता है। हाय ! मैं नहीं जानती
हूँ, कि ऐसे पराक्रमी पाण्डव उन हीन-पराक्रम शत्रुओं
के दिये हुए मेरे क्लेश को क्यों सह रहे हैं। इन
पापी और दुर्बल शत्रुओं के दिये हुए दुःख मेरे
हृदय से बहुत दिनों तक कभी दूर न होंगे। हे
वासुदेव जी ! और अधिक क्या कहूँ। देखो, यह

दीर्घकालं प्रदीप्ताऽस्मि पापानां पापकर्मणाम् ॥ ११९ ॥
कुले महति जाताऽस्मि दिव्येन विधिना किल ।
पाण्डवानां प्रिया भार्या स्नुषा पाण्डोर्महात्मनः ॥ १२० ॥
कचग्रहमनुप्राप्ता साऽस्मि कृष्ण ! वरा सती ।
पञ्चानां पाण्डुपुत्राणां प्रेक्षतां मधुसूदन ! ॥ १२१ ॥
इत्युक्त्वा प्रारुदत्कृष्णा मुखं प्रच्छाद्य पाणिना ।
पद्मकोशप्रकाशेन मृदुना मृदुभाषिणी ॥ १२२ ॥
स्तनावपतितौ पीनौ सुजातौ शुभलक्षणौ ।
अभ्यवर्षत पाञ्चाली दुःखजैरश्रुविन्दुभिः ॥ १२३ ॥
चक्षुषी परिमार्जन्ती निःश्वसन्ती पुनः पुनः ।
वाष्पपूर्णेन कण्ठेन क्रुद्धा वचनमब्रवीत् ॥ १२४ ॥
नैव मे पतयः सन्ति न पुत्रा न च वान्धवाः ।
न भ्रातरो न च पिता नैव त्वं मधुसूदन ! ॥ १२५ ॥
ये मां विप्रकृतां क्षुद्रैरुपेक्षध्वं विशोकवत् ।
न च मे शाम्यते दुःखं कर्णो यत्प्राहसत्तदा ॥ १२६ ॥
चतुर्भिः कारणैः कृष्ण ! त्वया रक्ष्याऽस्मि नित्यशः ।
संवन्धाद्गौरवात्सख्यात्प्रभुत्वेनैव केशव ! ॥ १२७ ॥

कुल में मेरा जन्म हुआ है, दिव्य विधि के अनुसार मैं पाण्डवों की प्यारी धर्मपत्नी और महात्मा पाण्डु की पुत्रवधू हुई हूँ; तो भी दुष्ट दुःशासन ने पाण्डवों के सामने ही बाल पकड़ कर मेरा अपमान किया। ॥११७।१२१॥

वैशम्पायन ने कहा—हे राजा जनमेजय ! द्रौपदी उक्त रीति से कहकर अपने कमलरूपी कोमल हाथों से मुख को ढक कर रोने लगी और उसके आंसू उसके स्तनों पर, जो दृढ़ पुष्ट सुडौल और शुभ लक्षणों से युक्त थे, गिरने लगे। उस समय द्रौपदी क्रोधित होकर गद्‌गद् वाणी से आँखों को वारम्वार पोंछती हुई कहने लगी—न मेरे पति हैं, न पुत्र हैं, न भाई हैं, न वान्धव हैं, न पिता है। अधिक क्या कहूँ, हे श्रीकृष्ण ! तुम भी मेरे सहायक नहीं हो, क्योंकि दुष्ट के हाथों मेरा अपमान होते देखकर भी, तुम लोगों ने शोकहीन भाव से उसकी लापरवाही की। कर्ण ने उस समय जो मेरी हँसी की थी, उस दुःख को मैं किसी तरह नहीं भूल सकती। हे श्रीकृष्ण ! तुम को सदा मेरी रक्षा करनी चाहिये, क्योंकि मैं तुम्हारी भक्त, रिश्तेदार, अग्निकुण्ड से निकलने से प्रतिष्ठित और तुम्हारे सामर्थ्य से सामर्थ्यवती हूँ। ॥१२२।१२७॥

वैशम्पायन उवाच—अथ तामब्रवीत्कृष्णस्तस्मिन्वीरसमागमे ।

वासुदेव उवाच—रोदिष्यन्ति स्त्रियो ह्येवं येषां क्रुद्धाऽसि भाविनि ।

बीभत्सुशरसञ्छन्नाञ्छोणितौघपरिप्लुतान् ॥ १२८ ॥

निहतान्वल्लभान्वीक्ष्य शयानान्वसुधातले ।

यत्समर्थं पाण्डवानां तत्करिष्यामि मा शुचः ॥ १२९ ॥

सत्यं ते प्रतिजानामि राज्ञां राज्ञी भविष्यसि ।

पतेद् द्यौर्हिमवाञ्छीर्येत्पृथिवी शकलीभवेत् ॥ १३० ॥

शुष्येत्तोयनिधिः कृष्णे ! न मे मोघं वचो भवेत् ।

*तच्छ्रुत्वा द्रौपदीवाक्यं प्रतिवाक्यं तथाऽच्युतात् ॥ १३१ ॥

साचीकृतमवैक्षत्सा पाञ्चाली मध्यमं पतिम् ।

आबभाषे महाराज ! द्रौपदीमर्जुनस्तदा ॥ १३२ ॥

मा रोदीः शुभताम्राक्षि ! यथाऽऽह मधुसूदनः ।

तथा तद्भविता देवि ! नाऽन्यथा वरवर्णिनि ! ॥ १३३ ॥

धृष्टद्युम्न उवाच—अहं द्रोणं हनिष्यामि शिखण्डी तु पितामहम् ।

दुर्योधनं भीमसेनः कर्णं हन्ता धनञ्जयः ॥ १३४ ॥

रामकृष्णौ व्यपाश्रित्य अजेयाः स्म रणे स्वसः ! ।

अपि वृत्रहणा युद्धे किं पुनर्धृतराष्ट्रजैः ॥ १३५ ॥

वैशम्पायन ने कहा—हे राजा जनमेजय ! महात्मा श्रीकृष्ण ने आये हुए वीरों के सामने द्रौपदी से कहा—हे द्रौपदी ! तू जिनके ऊपर कुपित हो रही है, उन सब की स्त्रियां भी इसी प्रकार से रोवेंगी और अर्जुन के बाणों से मरे हुए और रुधिर में भरे हुए, पृथ्वी पर पड़े हुए अपने-अपने पतियों को देख-देख कर विलाप करेंगी । हे भाविनी ! मैं सत्य प्रतिज्ञा करके कहता हूँ, कि यथाशक्ति पाण्डवों का कार्य पूरा करके तुझको राजरानी बनाऊँगा । चाहे समुद्र सूख जाय, हिमालय पर्वत बीच से फट जाय, स्वर्गलोक नीचे गिर पड़े और पृथ्वी के सैंकड़ों टुकड़े हो जायें परन्तु मेरा वाक्य निष्फल नहीं होगा ॥१२८।१३०॥

भगवान् वासुदेव ने जब इस प्रकार की प्रतिज्ञा की, तब द्रौपदी ने तिरछी दृष्टि से अर्जुन की ओर देखा । उन्होंने द्रौपदी को सम्बोधन करके कहा—हे द्रौपदी ! अब तुम मत रोओ । श्रीकृष्ण ने जो कुछ कहा है वह कभी अन्यथा नहीं हो सकता ।

* तद्द्रौपदीवाक्यं श्रुत्वा तथाऽच्युतात्प्रतिवाक्य श्रुत्वाऽर्जुनो द्रौपदीमाबभाषे इति व्यवहितेनाऽन्वयः ।

वैशम्पायन उवाच–इत्युक्तेऽभिमुखा वीरा वासुदेवमुपस्थिताः ।
तेषां मध्ये महाबाहुः केशवो वाक्यमब्रवीत् ॥ १३६ ॥

इति श्रीमन्महाभारते वनपर्वणि अर्जुनाभिगमनपर्वणि द्रौपद्याश्वासने द्वादशोऽध्याय ॥ १२ ॥

इसके पीछे धृष्टद्युम्न ने कहा– हे बहन ! मैं द्रोणाचार्य को मारूँगा, शिखण्डी भीष्म को मारेंगे, भीमसेन दुर्योधन को मारेंगे और अर्जुन कर्ण को मारेंगे। अधिक क्या कहूँ, हम लोग श्रीकृष्ण और बलदेव को सहायक पाकर यदि युद्धभूमि में खड़े होंगे, तो धृतराष्ट्र के पुत्रों की कौन कहे, इन्द्र भी हमारा सामना न कर सकेंगे। वैशम्पायन ने कहा–हे राजा जनमेजय ! यह कहकर वे सब वीर श्रीकृष्ण जी के पास आये। उस समय श्रीकृष्ण जी युधिष्ठिर से यों कहने लगे ॥१२१।१३६॥

वनपर्व का बारहवां अध्याय समाप्त हुआ ॥ १२ ॥

महाभारत का तृतीय अङ्क समाप्त हुआ।

इति श्रीमन्महाभारते तृतीयः खण्डः ।

